


# नागानन्दम्

नाम नाटकम् ।

---

महाकवि श्रीहर्षदेवविरचितम् ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समुद्भासितम् ।

---

द्वितीय संस्करणम् ।



कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

ई° १८८६ ।

# नागानन्दम् (क)।

## प्रथमोऽङ्कः (ख)।

नान्दी (ग)

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणम्

पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि।

---

वाग्देवीं हृदये ध्यात्वा बालानां बोधहेतवे।

नागानन्दस्य विवृतिर्जीवानन्देन तन्यते॥

(क) नागानन्दमिति। नागानां पन्नगानाम् आनन्दो यस्मिन् तत् अथवा नागान् पन्नगान् आनन्दयतीति नागानन्दं पचादित्वादच्प्रत्ययः।

(ख) अङ्क इति। अङ्कयति लक्षयति व्यञ्जयतीति यावत् रसभावादीनिति अङ्कः। तल्लक्षणमुक्तं दर्पणे। यथा। प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः। भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः। विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः। युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च। नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्। आवश्यकानां कार्याणामविरोधाद्विनिर्मितः। नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः। आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा। दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः। विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा। दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरञ्च यत्। शयनाधरपानादि नगराद्यवरोधनम्। स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः। देवीपरिजनादीनाममात्यवणिजामपि। प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः। अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तित इति।

मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः स कोऽन्यःपुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥१॥(ख)

अपि च,

कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरै-
र्भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा दिव्यनारीजनेन।
सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद् वासवेन
ध्यायन् बोधेरवाप्तौ न चलित इति वः पातु दृष्टो मुनीन्द्रः
॥२॥ (ग)

---

(क) नान्दीति। नन्दयति देवानिति नान्दी विघ्नविनाशार्थं नटैः क्रियमाणो मङ्गलाचरणविशेषः। तदुक्तं दर्पणे। आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति कथ्यते इति।

(ख) ध्यानव्याजमिति। ध्यानं समाधिरेव व्याजः छलं तत् उपेत्य प्राप्य आश्रित्येत्यर्थः कां कान्तामिति शेषः चिन्तयसि भावयसि, चक्षुः उन्मील्य विकाश्य अनङ्गशरातुरं कामबाणविद्धम् इमं जनं मामिति भावः पश्य अवलोकय, त्राता रक्षकोऽपि रक्षणसमर्थोऽपीति यावत् नो रक्षसि? मिथ्या कारुणिकः दयालुकोऽसि, ते कारुणिकत्वं मिथ्येत्यर्थः त्वत्तः अन्यः निर्घृणतरः अतिनिर्दयः पुमान् कः? कोऽपि नास्तीत्यर्थः। मारवधूभिः कामवधूभिः कामिनीभिरिति भावः। सेर्ष्यं सासूयं यथा तथा इति इत्थम् अभिहितः उक्तः तिरस्कृत इति यावत् बुद्धः ज्ञानी बुद्धधर्मावलम्बी वा जिनः युष्मान् रक्षत्वानिति भावः पातु रक्षतु। पाठं कविमीढ़ितं इत्थं कल्पी- केवं हि मः मतो मततमाः पाठं कविमीढ़ितमिति तत्त्वचात्।

(ग) कामेनेति। कामेन चापं कार्मुकम् आकृष्य प्रसार्य्येति भावः, मारवीरैः कामानुचरैः वसन्तचन्द्रमलयानिलादिभिरिति भावः वीरैः कामिजनप्रहाराय समुद्यतैर्योधैरिति भावः। हताः ताड़िता

नान्द्यन्ते—

सूत्रधारः । अलमतिविस्तरेण । अद्याहमिन्द्रोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राजश्रीहर्षदेवस्य पादपद्मोपजीविना(च) राजसमूहेनोक्तः । यत्तदस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालङ्कृतं(छ) विद्याधरचक्रवर्त्तिप्रतिबद्धं (ज) नागानन्दं नाम नाटकं कृतमस्माभिः श्रोत्रपरम्परया श्रुतं न च प्रयोगतो(झ) दृष्टम् । तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो (ञ) बहुमानादस्मासु(ट)

---

पटवः समुच्चस्वनाः पटहा वाद्यभेदा येषां तथोक्ताः अत एव वल्गन्ति उद्धतं चरन्तीति तादृशाः तैः मारवीरैरिति भावः, दिव्यनारीजनेन सुराङ्गनावर्गेण भ्रूभङ्गेन उत्क्षेपेण जृम्भया स्मितेन च चलिते चञ्चलतां गते दृशौ नयने यस्य तादृशेन सता, सिद्धैः देवयोनिविशेषैः प्रह्वं नतम् उत्तमाङ्गं शिरो येषां तथोक्तैः अवनतमस्तकैरित्यर्थः प्रणमद्भिरिति यावत् तथा वासवेन इन्द्रेण पुलकितवपुषा रोमाञ्चितशरीरेण न चलित इति विस्मयात् चमत्कारबुद्ध्या दृष्टः ध्यायन् समाधौ तिष्ठन् बोधैः खड्गः ग्रामनिविष्टचेता इत्यर्थः मुनीन्द्रो वः युष्मान् पातु रक्षतु । शार्दूलविक्रीडितं वृत्तम् ।

(च) पादपद्मोपजीविना चरणारविन्दाश्रितेन ।

(छ) अपूर्वेति । अपूर्वम् अद्भुतं यद् वस्तु इतिवृत्तं तस्य रचनया वर्णनेन अलङ्कृतं शोभितम् ।

(ज) विद्याधरेति । विद्याधराणां चक्रवर्त्तिना अधीश्वरेण प्रतिबद्धं युक्तं तत्कथालङ्कृतमित्यर्थः ।

(झ) प्रयोगतः अभिनयेन ।

(ञ) सकलेति । सकलानां जनानां हृदयाह्लादिनः सकल मनोरञ्जकस्य ।

(ट) बहुमानात् बहुगौरवात् ।

चानुपूर्वबुद्ध्या यथावत्प्रयोगेणाद्य त्वया नाटयितव्यमिति (ठ)। तद्यावदिदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि। परिक्रम्यावलोक्य च। आवर्जितानि (ड) च सकलसामाजिकमनांसि इति मे निश्चयः। यतः—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी<br>
लोके हारि च सिद्धराजचरितं नाट्ये च दक्षा वयम्।<br>
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-<br>
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥३॥(ढ)

तद्यावदहं गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि। परिक्रम्य नेपथ्याभिमुखमवलोक्य। इदमस्मद्गृहं यावत् प्रविशामि, प्रविश्य आर्ये! (ण) इतस्तावत्।

प्रविश्य नटी। सास्रम्। (त) अज्ज! इयम्हि मन्दभग्गा।

---

(ठ) नाटयितव्यम् अभिनेतव्यम्।

(ड) आवर्जितानि वशीकृतानि शुश्रूषार्थमभिमुखीकृतानीति यावत्।

(ढ) श्रीहर्ष इति। श्रीहर्षः निपुणः विचक्षणः कविः काव्यरचयिता, एषा परिषदपि सभ्यमण्डली अपीत्यर्थः गुणग्राहिणी गुणपक्षपातिनी, लोके जगति सिद्धराजस्य चरितं हारि मनोहारि च, वयञ्च नाट्ये अभिनयव्यापारे दक्षाः निपुणाः, एकैकमपि उक्तं वस्तु श्रीहर्षादिकमिति भावः इह जगति वाञ्छितफलप्राप्तेः अभीष्टलाभस्य पदं स्थानं हेतुरिति यावत् मम भाग्योपचयात् भाग्योत्कर्षात् अयं सर्वः गुणानां गणः समुदितः सम्यक्त्वेन उदितः उपस्थितः किं पुनः वक्तव्य इति शेषः। शार्दूलविक्रीडितं वृत्तम्।

(ण) आर्ये मान्ये।

(त) आर्य सभ्यम्।

आणवेदु अज्जउत्तो को णिओओ अणुचिट्ठीअदु त्ति (१)।

सूत्र। नटीमवलोक्य। आर्य्ये! नाटानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते।

नटी। अज्ज! कधं ण रोदिस्सं। जदो दाव तादो अज्जाए सह थविरभावं आविअ अदूरजादणिव्वेदो कुडुम्बभारुव्वहणजोग्गो दाणीं (३) तुमं ति हिअए वितक्किअ तवोवणं गदो (२)।

सूत्र (६)। सनिर्वेदम् (७) अये! कथं मां परित्यज्य तपोवनं यातौ पितरौ तत् किमिदानीं युज्यते, विचिन्त्य—अथवा कथमहं गुरुचरण-परिचर्या-सुखं परित्यज्य गृहे तिष्ठामि कृतः।

---

(१) आर्य्ये! इयमस्मि मन्दभाग्या। आज्ञापयतु आर्य्यपुत्रः को नियोगोऽनुष्ठीयतामिति।

(२) आर्य्य! कथं न रोदिष्यामि। यतस्तावत् तात आर्य्यया सह स्थविरभावं प्राप्य अदूरजातनिर्वेदः कुटुम्बभारोद्वहनयोग्य इदानीं त्वमिति हृदये वितर्क्य तपोवनं गतः।

---

(३) तातः श्वशुर इति यावत्। आर्य्यया श्वश्र्वा। स्थविरभावं वार्द्धकम्। अदूरेति। अदूरम् आसन्नं यथा तथा जातो निर्वेदः संसारं प्रति वीतरागत्वं यस्य तथोक्तः। कुटुम्बेति कुटुम्बानां पोष्यवर्गाणां भारोद्वहने योगक्षेमविधाने समर्थः शक्त इत्यर्थः।

(६) सूत्रधारः प्रधाननटविशेषः।

(७) सनिर्वेदं सवैराग्यम्।

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम्।
वनं याम्यहमप्येष यथा जीमूतवाहनः॥४॥ (न)

इति निष्क्रान्तौ।

प्रस्तावना (प)।

ततः प्रविशति नायको विदूषकश्च।

नायकः। सनिर्वेदम् वयस्य आत्रेय!

रागस्यास्पदमित्यवैमि नहि मे ध्वंसीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ।
एवं निन्द्यमपीदमीप्सितफलप्राप्त्यै भवेद्यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे॥५॥(फ)

---

(न) पित्रोरिति। अहमप्येव क्रमागतं पैतृकम् ऐश्वर्यं सम्पद्मित्यर्थः त्यक्त्वा पित्रोः जननीजनकयोः शुश्रूषां सेवां विधातुं कर्तुं जीमूतवाहनो यथा वनं यामि गच्छामि।

(प) प्रस्तावना। प्रस्ताव्यते सूच्यते प्रस्तुतमनयेति तयोक्ता प्रपूर्वात् स्तौतेर्ण्यन्तात् भावे अनप्रत्ययः। तल्लक्षणमुक्तं दर्पणे। नटी विदूषको वापि पारिपार्श्विक एव वा सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सेति।

(फ) रागस्येति। यौवनं रागस्य विषयवासनाया आस्पदं स्थानम् इति अवैमि जानामि, ध्वंसि विनश्वरम् इति मे प्रत्ययः नहि इति न, अपितु क्षणभङ्गुरमेवेति जानामीत्यर्थः। को वा जनः क्षितौ पृथिव्यां कृत्याकृत्यविचारणासु कर्त्तव्याकर्त्तव्यध्यानेषु विमुखम् अक्षममिति यावत् न वेत्ति न जानाति सर्व एव वेत्तीत्यर्थः एवं निन्द्यमपि इदं यौवनं यदि इत्थम् अनेन प्रकारेण पितरौ भक्त्या शुश्रूषमाणस्य सेवमानस्य मे मम याति गच्छति अतिक्रामतीति

विदू। सरोषम् भो वअस्स! णं णिव्विण्णो एव्व तुमं एत्तिअं कालं एदाणं जीवन्तमुदाणं कदे इमं ईदिसं वणवासदुक्खं अणुहवन्तो। ता पसीद दाणिं पि दाव गुरुअणसुस्सूसाणिब्बन्धादो (ब) णिवत्तिअ इच्छापरिभोगरमणिज्जं रज्जसुहं अणुहवीअदु (१)।

माधवः। वयस्य! न सम्यगभिहितं त्वया। कुतः।

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किन्तथा
यत् संवाहयतः सुखं तु चरणौ तातस्य किं राजके।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ॥६॥ (भ)

---

(१) भो वयस्य! ननु निर्विण्ण एव त्वमेतावन्तं कालं एतयोर्जीवन्मृतयोः कृते इदमीदृशं वनवासदुःखमनुभवन्। तत् प्रसीद इदानीमपि तावत् गुरुजनशुश्रूषानिर्बन्धात् निवृत्त्य इच्छापरिभोगरमणीयं राज्यसुखं अनुभूयताम्।

---

यावत् तदा वाञ्छितफलप्राप्तौ अभीष्टलाभाय भवेत् मन्दमपि वस्तु शुभकर्मणि व्याप्रियमाणं शुभफलदं भवतीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ब) निर्विण्णः निखिन्नः। जीवन्मृतयोः जीवतोरपि मृतप्राययो-रित्यर्थः पित्रोरिति शेषः जीर्णत्वादिति भावः। गुरुचरणेति गुर्वोः पित्रोश्चरणशुश्रूषायां यः निर्बन्धः आग्रहातिशयः आदर इति यावत्। तस्मात्।

(भ) तिष्ठन्निति। पितुः पुरः अग्रतः भुवि भूतले तिष्ठन् यथा भाति राजते अत्र इति शेषः सिंहासने तिष्ठन् तथा किं नैव भातीत्यर्थः तातस्य चरणौ संवाहयतः सेवमानस्य यत् सुखं भवतीति शेषः,

विदू। भो वअस्स! अच्चन्तसाहसिओ मदङ्गहदओ दे पडिवक्खो, तस्सिं च समासण्णट्ठिदे दे पधाणामच्चसमधि-ट्ठिदंपि ण तुए विणा रज्जं सुत्थिरं (ग) त्ति पडिभादि (१)।

नायकः। धिङ्मूर्ख! मतङ्गो राज्यं हरिष्यतीति शङ्कसे।

विदू। अध इं (२)।

नायकः। यद्येवं तत् किं न स्यात्। ननु स्वशरीरात् प्रभृति सर्वं परार्थमेव मया परिपाल्यते यत्तु स्वयं न दीयते तत्तातानुरोधात् तत् किमनेनावस्तुना चिन्तितेन वरं तताज्ञैवानुष्ठिता आज्ञापितश्चास्मि तातेन। यथा वत्स! जीमूतवाहन! बहुदिवसपरिभोगेण स्वीकृतसमित्कुश-कुसुममुपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्त्तते। तदितो मलयपर्वतं गत्वा किञ्चित्तस्मिन् निवासयोग्य-

(१) भो वयस्य! अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते ते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थिरमिति प्रतिभाति।

(२) अथ किम्।

मित्यर्थः इह मनोरथफलादपि अधिकं फलं येन तथाभूतः कल्पद्रुमः अपि अर्थिने याचकाय दत्तः। अतःपरं किं कर्त्तव्यं ते तव मनसि यत् स्थितं तत् कथय। शार्दूलविक्रीड़ितं वृत्तम्।

(ग) अत्यन्तसाहसिकः अतिदुर्दान्तः। प्रतिपक्षः शत्रुः। समासन्नस्थिते सन्निहिते। प्रधानामात्यसमधिष्ठितं मुख्यमन्त्रिसंरक्षितम्। सुस्थिरं निर्विघ्नेन स्थितम्।

(घ) यद्येवं यदि एवं मतङ्गेन मे राज्यं हृतं तत् तदा किं न

नायकः । निरूप्य सविस्मयम् । अये ! प्राप्ता एव वयं मलय-पर्वतम् । समन्तादवलोक्य । अहो ! रामणीयकमस्य । तथाहि

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः ।
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतै-
र्दृष्टोऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥८॥(ब)

तदेह्यावयो वासयोग्यं किञ्चिदाश्रमपदं निरू-पयावः ।

---

उत्सङ्गस्य क्रोडस्य परिमिलनेन सम्पर्केण लब्धः सञ्जातः बहलः प्रभूतः परिमलः गन्धः तथाभूतः । विमलेति विमले निर्मले तटे निपतनेन जर्जरायमाणो चूर्णतामापद्यमानो यः निर्झरः पर्वतोपरितटात् पतद्वारिसङ्घातः तस्मात् उच्छलितः समन्तात् विक्षिप्तो यः शिशिरः शीतलः शीकराणां जलकणानाम् आसारः धारासम्पातः तद्वाही तद्वाहनिरतः । प्रथमेति प्रथमो यः सङ्गमः तस्मिन् उत्कण्ठितायाः उत्सुकायाः प्रियायाः कण्ठग्रह इव कण्ठाश्लेष इव । अपनयन् हरन् । रोमाञ्चयति जातरोमाञ्चं करोति उल्लासोदयादिति भावः ।

(ब) माद्यदिति । माद्यतां मदस्राविणां दिग्गजानां गण्डा एव भित्तयः तासां कषणैर्घर्षणैः भग्नाः अतएव स्रवन्तः क्षरद्रसाः चन्दनाः चन्दनतरवः यत्र तथाभूतः जलनिधेः समुद्रस्य वीचिभिस्तरङ्गैः आस्फालितः आहतः अतएव क्रन्दन्ति ध्वनन्ति कन्दरा दर्य एव गह्वराणि बिलानि यस्य तथोक्तः तथा सिद्धाङ्गनानां सिद्धाख्य-देवयोनिविशेषनारीणां गतैः गमनैः पादालक्तकेन रक्ता मौक्तिकशिलाः मुक्तामयप्रस्तरा यत्र तथाविधः अयं मलयाचलः दृष्टः सन् मे मम चेतः किमपि अनिर्वचनीयं यथा तथा उत्सुकं करोति कौतुकं जनयति । शार्दूलविक्रीडितं वृत्तम् ।

विदू। एव्वं करेम्ह। अग्रतः स्थित्वा। एदु भवं। आरोहणं (१)। नाटयतः।

नायकः। दक्षिणाक्षिस्पन्दनं सूचयन्। अये!

दक्षिणं स्पन्दते चक्षुः फलाकाङ्क्षा न मे क्वचित्।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम्॥ ८॥ (ग)

विदू। भो वअस्स! अवस्समासण्णं (घ) दे पिअं णिवेदेदि (२)।

नायकः। एवं नाम (ङ) यथाह भवान्।

विदू। विलोक्य। भो वअस्स पेक्ख पेक्ख। एदं क्खु सविसेसबहलसिणिद्धपादवविसोहिदं सुरहिहविगन्धगब्भ-

---

(१) एवं कुर्वः। एतु भवान्।
(२) भो वयस्य! अवश्यमासन्नं ते प्रियं निवेदयति।

---

(ग) दक्षिणमिति। दक्षिणं चक्षुः स्पन्दते स्फुरति, मे मम क्वचित् फलस्य दक्षिणाक्षिस्पन्दनजन्यस्य शुभस्य इत्यर्थः आकाङ्क्षा अभिलाषः न अस्तीति शेषः। मुनिवचः मुनेः [illegible] वचः दक्षिणाक्षिस्पन्दनेन शुभफलसूचकवचनमित्यर्थः न च मिथ्या असत्यम्भावीत्यर्थः, अतः इदं दक्षिणाक्षिस्पन्दनं किं नु कथयिष्यति प्रकटयिष्यतीति यावत्। पथ्यावक्त्रं वृत्तं युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितमिति लक्षणात्।

(घ) आसन्नं समीपवर्त्ति।

(ङ) एवं नामेति। एवम् आसन्नप्रियं नाम सम्भावनायां सम्भाव्यते इत्यर्थः शुभनिमित्तसूचनादिति भावः।

भिन्नोद्दामधूमनिर्गमं अनुद्विग्नसुखनिषण्णशावकमृगं (छ)
तपोवनं विय लक्खीअदि (१)।

नायकः। सम्यगुपलक्षितम्। तपोवनमेवैतत्। कुतः।
वासोऽर्थं दययैव नातिपृथवः कृत्तास्तरूणां त्वचो
भग्नालक्ष्यजरत्कमण्डलुरतः स्वच्छं पयो नैर्झरम्।
दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्यः क्वचिन्मेखला
नित्याकर्णनया शुकेन च पदं साम्नामिदम्पठ्यते ॥१०॥(ज)

(१) भो वयस्य! प्रेक्षस्व प्रेक्षस्व। एतत् खलु सविशेषघनस्निग्ध-पादपविशोभितं सुरभिच्छविनिर्भरगर्भितोद्दामधूमनिर्गमम् अनुद्विग्नसुख-निषण्णशावकमृगं तपोवनमिव लक्ष्यते।

(छ) सविशेषेति। सविशेषम् अत्यन्तं घनैः स्निग्धैः पादपैः तरुभिः विशोभितं विशेषेणालङ्कृतं सुरभिः शोभनो छविर्गन्धो गर्भे जातोऽस्य तादृशः उद्दामः उत्कटः धूमस्य निर्गमो यस्मात् तथाभूतं तथा अनुद्विग्नाः अतएव सुखनिषण्णाः शावकगणाः मृगाणांशिशु-भेदः यस्मिन् तपोवनम्।

(ज) वासोऽर्थमिति। वासोऽर्थं परिधानार्थं तरूणां नाति-पृथवः नातिस्थूलाः त्वचः वल्कलानि दययैव कृपालुतयैव कृत्ताः छिन्नाः, भग्नोऽपि आलक्ष्यः सम्यग्दृष्टः जरन् जीर्णतामापद्यमानः कमण्डलुः जलपात्रविशेषः यस्मिन् अतः स्वच्छं सुनिर्मलम् आवि-लत्वे तथा कमण्डलुदर्शनं न सम्भवतीति भावः नैर्झरं पयः निर्झरो-दकम्। क्वचित् प्रदेशे वटुभिः ब्रह्मचारिबालकैः त्रुटिताश्छिन्ना अतएव उज्झिताः त्यक्ता मौञ्ज्यः मुञ्जतृणनिर्मिता मेखला काञ्चीदामानि दृश्यन्ते, तथा नित्याकर्णनया नित्यश्रवणेन हेतुना शुकेन पक्षिणा साम्नां सामवेदानाम् इदं पदं गीयते च। शार्दूलविक्रीडितं वृत्तम्।

तदेहि प्रविश्यावलोकयावः। प्रवेशं नाटयतः।

नायकः। सविस्मयं विलोक्य। अहो! नु खलु मुदितमुनिजनप्रविचार्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्बटुच्छिद्यमानार्द्रार्द्रसमित्तापसकुमारिकापूर्यमाणबालवृक्षालवालस्य प्रशान्तरमणीयता (क) तपोवनस्य।

इह हि—

मधुरमिव वदन्तः स्वागतं भृङ्गशब्दै-
र्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः।
मम ददत इवार्घ्यं पुष्पवृष्टिं किरन्तः
कथमतिथिसपर्य्यां शिक्षिताः शाखिनोऽपि ॥११॥ (ख)

---

(क) मुदितेति। मुदितैः हृष्टैः मुनिजनैः प्रकर्षेण विचार्यमाणो मीमांस्यमानो सन्दिग्धः सन्देहास्पदं वेदवाक्यानां विस्तरो यत्र तादृशस्य पठद्भिः बटुभिः छिद्यमाना आर्द्रार्द्राः अतिसरसाः समिधः यज्ञकाष्ठानि यत्र तथाभूतस्य तथा तापसकुमारिकाभिः आपूर्य्यमाणः जलैः सम्भ्रियमाणो बालवृक्षाणाम् आलवालः तन्मूले जलदानार्थं वर्त्तुलाकारो वृतिविशेषो यत्र तथाभूतस्य। प्रशान्तञ्च रमणीयञ्च तस्य भावः स्निग्धमनोहरत्वमित्यर्थः।

(ख) मधुरमिति। शाखिनोऽपि तरवोऽपि अतिथिसपर्य्याम् अतिथिसेवां कथं शिक्षिताः तापसजनैरिति शेषः। तथाहि अमी शाखिनः भृङ्गाणां शब्दैः भ्रमरगुञ्जनैः मधुरमिव स्वागतं वदन्तः सन्तः फलनम्रैः फलभरावनतैः शिरोभिः नतिमिव कुर्वते प्रणमन्तीव, तथा पुष्पवृष्टिं किरन्तः पुष्पाणि वर्षन्त इत्यर्थः मम अर्घ्यं ददत इव। उत्प्रेक्षालङ्कारः। तदुक्तं दर्पणे, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। मालिनीवृत्तम्, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्।

तन्निवासयोग्यमिदं तपोवनम् मन्ये भविष्यतीह वसतामस्माकं निर्वृतिः (ग)।

विदू। भो वयस्य ! किं क्खु एदे ईसिबलिदकन्धरा णिच्चलमुहाव सरन्तदरदलिददब्भकवला समुण्णमिदद्दिण्णेक्ककण्णा सुहणिमीलिदलोअणा आअण्णन्ता विअ (घ) हरिणा लक्खीअन्ति। (१)

नायकः। कर्णं दत्त्वा। सखे ! सम्यगुपलक्षितम्।

तथाहि—

स्थानप्राप्तावधानं प्रकटितसमतामन्द्रतारव्यवस्था-
निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वरेण।
एते दन्तान्तरालस्थिततृणकवलच्छेदशब्दं नियम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति
॥ १२ ॥ (ङ)

(१) भो वयस्य ! किं खल्वेते ईषद्वलितकन्धरा निश्चलमुखापसरद्दरदलितदर्भकवलाः समुन्नमितदत्तैककर्णाः सुखनिमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते।

(ग) निर्वृतिः सन्तोषः।

(घ) ईषदिति। ईषत् किञ्चित् वलिताः साचीकृताः कन्धरा ग्रीवा यैः तथोक्ताः। निश्चलेति निश्चलेभ्यः स्थिरेभ्यः चर्वणादिव्यापाररहितेभ्य इति भावः मुखेभ्यः अपसरन्तः स्खलन्तः दरदलिताः किञ्चित् खण्डिताः दर्भकवलाः कुशाङ्कुरग्रासा येषां तथाभूताः। समुन्नमितेति समुन्नमितः दत्तः अवहित इति यावत् एकः कर्णो यैः तादृशाः। तथा सुखेन निमीलिते लोचने यैः तथाविधाः। आकर्णयन्त इव शृण्वन्त इव किमपीति शेषः।

(ङ) स्थानेति। एते कुरङ्गाः हरिणाः व्याजिह्मानि अलस-

विदू । भो वअस्स ! को उण एसो तवोवणे गाअदि । (१)

नायकः । यथैताः कोमलाकुञ्चिततालाभिहन्यमानस्फुटं क्वणन्ति तन्त्र्यस्तथा काकलीप्रधानगीतमिदं तर्कयामि । अङ्गुल्यग्रं चाग्रतो निर्दिशन् । अस्मिन्नायतने देवतामाराधयन्ती काचिद्दिव्या वीणामुपवीणयति । (च)

विदू । भो वअस्स ! एहि अम्हे वि देवदाअदणं पेक्खम्ह । (२)

(१) भो वयस्य ! कः पुनरेष तपोवने गायति ।

(२) भो वयस्य ! एहि आवामपि देवतायतनं प्रेक्षावहे ।

---

वलितानि वक्राणि येषां तथोक्ताः विषमा इति भावः दन्ताना-मन्तरालेषु अभ्यन्तरेषु स्थिता ये तनुकवलाः तेषां छेदमर्द्धं चर्वणा-नियम्य बद्धा प्रकटितः आविष्कृतः समतया साम्येन या मन्द्रतार-वस्था गम्भीरोच्चव्यवस्थानं तया निस्तोदिन्याः सुचरं ध्वनन्त्या विपञ्ची-वीणायाः तन्त्रीस्वरेण अविकृतेनेव भ्रमरगुञ्जितेनेव मिलितं स-तथा स्फुटानि सुव्यक्तानि वलितानि मनोहराणि पदानि सुप्-तिङन्तरूपाणि यस्य तादृशं गीतम् स्थाने यथायोग्यं इति भावः प्राप्त-अवधानं यथास्यात् तथा आकर्णयन्ति शृण्वन्ति । स्रग्धरावृत्त-म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति त-ल्लक्षणात् ।

(च) कोमलेति । कोमलेन मृदुना आकुञ्चितेन अभिहन्यमान-ताड्यमानाः । क्वणन्ति स्वनन्ति । काकलीप्रधानमिति काकली सूक्ष्म-मधुरास्फुटः स्वनः प्रधानं यत्र तत् यथा तथा काकली तु सूक्ष्मे ध्वनौ तु मधुरास्फुटे इत्यमरः । उपवीणयति वीणया गायतीत्यर्थः ।

नायकः। वयस्य! साधूक्तं खलु भवता। वन्द्याः खलु देवताः। (उपसर्पन् सहसा स्थित्वा) वयस्य! कदाचिद् दृष्टमनर्होऽयं जनो भवति। तदावां तमालगुल्मान्तरितौ पश्यन्तावसरं प्रतिपालयावः (छ)। (तथा कुरुतः।)

(ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च।)

नायिका। (गायति)—

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!।
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन ॥१२॥ (ज)

नायकः। (कर्णं दत्त्वा) वयस्य! अहो! गीतमहो! (झ) वाद्यम्।

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः।

---

(छ) अनर्हः अयोग्यः। तमालेति तमालानां तदाख्यतरूणां गुल्मेन निचयेन विस्तारेणेत्यर्थः अन्तरितौ आच्छादितौ गोपितौ इत्यर्थः। अवसरं समयं प्रतिपालयावः अपेक्षावहे।

(ज) उत्फुल्लेति। उत्फुल्लानां विकसितानां कमलानां केसरेषु किञ्जल्केषु यः परागः रजः तद्वत् गौरी द्युतिः कान्तिर्यस्याः तादृशि! कनकप्रभे इत्यर्थः भगवति गौरि! युष्मत्प्रसादेन भवदनुग्रहेण मम अभिवाञ्छितम् अभिलषितं हि निश्चितं प्रसिध्यतु सफलताम् एतु। आर्य्यावृत्तम्, यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्येति तल्लक्षणात्।

(झ) अहो गीतम् अहो आश्चर्य्यं आश्चर्यं गीतमित्यर्थः।

(ञ) व्यक्तिरिति। दशविधेन दशप्रकारेण अमुना श्रोत्रविषयीकृतेनेति भावः व्यज्यन्ते स्वरा अनेनेति व्यञ्जनः, स चासौ धातुश्चेति तथोक्तेन स्वरव्यञ्जकसङ्गीतावयवविशेषेणेत्यर्थः। व्यक्तिः स्वरप्रकाशनं

गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि सम्पादिता
आतोद्यानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः

॥ १४ ॥ (अ)

चेटी। सप्रश्रयम्। भट्टिदारिए! चिरं क्खु वादअन्तिए कुदो ण परिस्समो अग्गहत्थाणं (१)।

नायिका। साधिक्षेपम् (ट)। हञ्जे! कुदो मे देवीए पुरदो वीणं वादअन्तिए अग्गहत्थाणं परिस्समो (२)।

चेटी। भट्टिदारिए! णं भणामि किं एदाए विअक्खणाए पुरदो वाइदेण। जा एत्तिअं कालं कष्पपाअवदुक्करेहिं णिअमोववासणेहिं आराधअन्तिए अज्ज वि ण दे पसादं दंसेदि (३)।

---

(१) भर्तृदारिके चिरं खलु वादयन्त्याः कुतो न परिश्रमोऽग्रहस्तानाम्।

(२) हञ्जे कुतो मे देव्याः पुरतो वीणां वादयन्त्या अग्रहस्तानां परिश्रमः।

(३) भर्तृदारिके! ननु भणामि किमेतस्या विचक्षणायाः पुरतो

---

सत्या अनुभूतेत्यर्थः। अयं द्रुतं शीघ्रोच्चरितत्वं मध्यं नातिशीघ्र-नातिमन्दोच्चरितत्वं लम्बितं दीर्घोच्चरितत्वं तैः परिच्छिन्नः विशेषितः अतएव त्रिधा उक्तप्रकारेण त्रिविधः लयः सङ्गीतस्य सङ्गतिस्थान-विशेषः विस्पष्टः सम्यक् प्रकटतां गतः। गोपुच्छप्रमुखाः गोपुच्छप्रभृतयः तिस्रोऽपि यतयः विच्छेदाः क्रमेण यथाक्रमं सम्पादिताः प्रकाशिताः। त्रयः त्रिविधा इत्यर्थः आतोद्यं वीणा तदनुगता तत्कृता वाद्यविधयः वाद्यव्यापाराश्च सम्यक् दर्शिताः प्रकटिताः। शार्दूलविक्रीडितं वृत्तम्।

(ट) साधिक्षेपं सतिरस्कारम्।

विदू। अथवा खु एसा किं ण पेक्खस्य (१)।

माधवः। को दोषः। निर्दोषदर्शनाः कन्यका भवन्ति। किन्तु कदाचिदस्मान् दृष्ट्वा बालभावसुलभात् साध्वसान्न चिरमिह तिष्ठेत्। तदनेनैव तमालजाला-न्तरेण (ठ) पश्यावः।

विदू। एव्वं करेम्ह। उभौ पश्यतः (२)।

विदू। दृष्ट्वा सविस्मयम् भो वअस्स! पेक्ख पेक्ख। अहह अच्छरिअं! ण केवलं वीणाविण्णाणेव्व (ड) सुहं करेदि। जाव इमिणा वीणाविण्णाणाणुरूवेण रूवेणवि अच्छीणं सुहं उप्पादेदि। का उण एसा?। किं दाव देवी?। आहो णाअकण्णा?। आहो विज्जाहरदारिआ?। आहो सिद्धकुलसम्भवेत्ति? (३)।

---

वादितेन। या एतावन्तं कालं कन्यकाजनदुष्करैर्नियमोपासनैराराध-यन्त्या अद्यापि न ते प्रसादं दर्शयति।

(१) कन्यका खल्वेषा। किं न प्रेक्षावहे।

(२) एवं कुर्वः।

(३) भो वयस्य! प्रेक्षस्व प्रेक्षस्व। अहो आश्चर्यम्!। न केवलं वीणाविज्ञानेनैव सुखं करोति। यावत् अनेन वीणाविज्ञानानुरूपेण रूपेणापि अक्ष्णोः सुखमुत्पादयति। का पुनरेषा। किं तावत् देवी?। आहोस्वित् नागकन्यका?। आहोस्वित् विद्याधरदारिका?। आहोस्वित् सिद्धकुलसम्भवेति?।

---

(ठ) तमालजालान्तरेण तमालतरुगुल्मव्यवधानेन।

(ड) वीणाविज्ञानेनैव वीणायां विषये ज्ञानेन सुनैपुण्येनेत्यर्थः।

चेटी । सविस्मयम् । भट्टिदारिए ! जदि एव्वं । ता कीस सिविणए इमं भणीअदि । णं हिअअट्ठिदो वरो देवीए दिण्णो (१) ।

विदू । तुवरा भो वअस्स ! अवसरो क्खु एसो अह्माणं देवीदंसणस्स । ता एहि उवसप्पह्म (२) ।

नायकः । न तावत् प्रविशामि ।

विदू । अनिच्छन्तमपि नायकमुद्दिश्य बलादाकृष्य । उपसप्पिअ । सोत्थि भोदीए । भोदि ! सच्चकं ज्जेव्व चदुरिआ भणादि । वरो एव्व सो देवीए दिण्णो (३) ।

नायिका । ससाध्वसमुत्तिष्ठन्ती नायकमुद्दिश्य हञ्जे ! को उण क्खु एसो ? (४) ।

चेटी । नायकं निरूप्यापवार्य इमाए अणस्सरिसाए आकिदीए एसो सो भअवदीए पसादीकिदोत्ति तक्केमि (५) ।

---

ममोपरि मन्त्रः । तद् विद्याधरचक्रवर्ती अचिरेणैव ते पाणिग्रहणं निर्वर्तयिष्यतीति ।

(१) भर्तृदारिके यद्येवं तत् किं स्वप्न एष भण्यते । ननु हृदयस्थितो वरो देव्या दत्तः ।

(२) भो वयस्य ! अवसरः खल्वेषोऽस्माकं देवीदर्शनाय । तदेहि उपसर्पावः ।

(३) स्वस्ति भवत्यै । भवति ! सत्यमेव चतुरिका भणति । वर एव स देव्या दत्तः ।

(४) हञ्जे ! को नु खल्वेषः ?

(५) अनया अनन्यसदृश्या आकृत्या एष स भगवत्या प्रसादीकृत इति तर्कयामि ।

नायिका सस्पृहं सवज्ञञ्च नायकमवलोकयति ।

नायकः । तनुरियं तरलायतलोचने !

असितकम्पितपीनघनस्तनि ! ।

श्रममलं तपसैव गता पुनः

किमिति सम्भ्रमकारिणि ! खिद्यते ॥१६॥ (द)

नायिका । अपवार्य्य हञ्जे ! अदिसज्झसेण ण सक्कुणोमि एदस्स अहिमुही ठादुं नायकं तिर्य्यक् सवज्ञञ्च पश्यन्ती किञ्चित् पराङ्मुखी तिष्ठति (१) ।

चेटी । भट्टिदारिए ! किं एदं ? (२) ।

नायिका । हञ्जे ! ण सक्कुणोमि एदस्स आसणे चिट्ठिदुं । ता एहि अस्सदो गच्छह्म (३) उत्थातुमिच्छति ।

विदू । भो ! भाअदि क्खु एसा । मम पाठअविज्जं विअ मुहुत्तअं धारेमि (४) ।

---

(१) हञ्जे ! अतिसाध्वसेन न शक्नोमि एतस्याभिमुखी स्थातुम् ।

(२) भर्तृदारिके ! किमेतत् ?

(३) हञ्जे ! न शक्नोमि एतस्यासन्ने स्थातुम् । तदेह्यन्यतो गच्छावः ।

(४) भो ! बिभेति खल्वेषा । मम पाठितविद्यामिव मुहूर्तं धारयामि ।

---

(द) तनुरिति । तरले चञ्चले आयते दीर्घे लोचने यस्याः तत् सम्बुद्धौ श्वसितेन निश्वासेन कम्पितौ पीनौ स्थूलौ घनौ निविडौ स्तनौ यस्याः तत्सम्बोधने हे सम्भ्रमकारिणि ! मद्दर्शनात् सम्भ्रान्ते इत्यर्थः इयं तनुः शरीरं तपसैव अलम् अत्यर्थं श्रमं गता, किमिति कथं पुनः खिद्यते ? द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ।

नायकः । को दोषः ? ।

विदू । भोदि ! किं एत्थ तुह्माणं तवोवणे ईदिसो आआरो । जेण अदिही आअदो वाआमेत्तएण वि ण सम्भावीअदि (१) ।

चेटी । नायिकां दृष्ट्वा आत्मगतम् । अणुरज्जदि विअ एत्थ एदाए दिट्ठी । भोदु एव्वं दाव भणिस्सं । प्रकाशम् । भट्टि-दारिए ! जुत्तं भणादि बह्मणो । उइदो क्खु दे अदिहि-जणसक्कारो । ता किं ईदिसे महाणुभावे पडिवत्ति-मूढ़ा (४) चिट्ठसि ? । अहवा चिट्ठ तुमं । अहं एव्व जधा-णुरूवं करइस्सं । नायकं निर्दिश्य । साअदं अज्जस्स । आसण-परिग्गहेण अलङ्करेदु अज्जो इमं पदेसं (२) ।

विदू । भो वअस्स ! सोहणं एसा भणादि । उवविसि-अ एत्थ मुहुत्तअं वीसमह्म (३) ।

---

(१) भवति ! किमत्र युष्माकं तपोवने ईदृश आचारः । येना-तिथिरागतो वाङ्मात्रेणापि न सम्भाव्यते ।

(२) अनुरज्यत इवात्र तस्या दृष्टिः । भवत्वेवं तावद् भणिष्यामि । भर्तृदारिके ! युक्तं भणति ब्राह्मणः । उचितः खलु ते अतिथिजनसत्-कारः । तत् किमीदृशे महानुभावे प्रतिपत्तिमूढ़ा तिष्ठसि ? अथवा तिष्ठ त्वम् अहमेव यथानुरूपं करिष्यामि । स्वागतमार्यस्य । आसन-परिग्रहेण अलङ्करोत्वार्य इमं प्रदेशम् ।

(३) भो वयस्य ! शोभनमेषा भणति । उपविश्यात्र मुहूर्त्तं विश्राम्यावः ।

---

(४) प्रतिपत्तिमूढ़ा इतिकर्त्तव्यविमूढ़ा ।

नायकः । युक्तमाह भवान् । उभावुपविशतः ।

नायिका । चेटीं दृष्ट्वा हञ्जे परिहाससीले ! मा एव्वं करेहि । कदावि कोवि तावसो पेक्खदि । तदो मं अविणीदेत्ति (न) सम्भावइस्सदि (१) ।

ततः प्रविशति तापसः ।

तापसः । आज्ञापितोऽस्मि कुलपतिना कौशिकेन (प) । यथा वत्स शाण्डिल्य ! पितुराज्ञया सिद्धयुवराजमित्रावसु-भंविष्यद्विद्याधरचक्रवर्त्तिनं कुमारजीमूतवाहनम् इहैव मलये पर्वते क्वापि वर्त्तमानं भगिन्या मलयवत्या वरहेतो-र्द्रष्टुमद्य गतः । तस्य प्रतीक्षमाणाया मलयवत्याः कदा-चिन्मध्यन्दिनसवनवेलावधिरतिक्रामेत् । तदेनामाहूयाग-च्छेति । तत् तपोवनगौरीगृहमेव गच्छामि । परिक्रम्य भूमिं निरूप्य सविस्मयम् । अये ! कस्य पुनरियं पांशुले भूप्रदेशे प्रकाशचक्रचिह्ना पदपंक्तिः (फ) । अग्रतो जीमूतवाहनं निर्दिश्य ।

---

(१) अयि परिहासशीले ! मैवं कुरु । कदापि कोऽपि तापसः प्रेक्षते । ततो मामविनीतेति सम्भावयिष्यति ।

---

(न) अविनीता दुश्चारिणी ।

(प) कुलपतिना ऋषिसहस्रस्य अन्नदानेन वेदाध्यापयिता महा-मुनिः कुलपतिरुच्यते तेन । कौशिकेन कुशिकनन्दनेन विश्वामित्रे-णेत्यर्थः ।

(फ) मध्यन्दिनेति । मध्यन्दिने मध्याह्ने यत् सवनं स्नानं तदेव विधिः व्यापारः तस्य वेलावधिः समयनियमः । अतिक्रामेत् अती-यात् । पांशुले रजस्वले । प्रकाशं प्रकटं चक्रस्य चक्ररेखालक्षणस्य चिह्नं यस्यां तादृशी । पदपङ्क्तिः पदविन्यासः ।

नूनमस्यैवेयं महापुरुषस्य । तथाहि—

उष्णीषः स्फुट एष मूर्द्धनि विभात्यूर्णेयमन्तर्भ्रुवो
श्चक्षुस्तामरसानुकारि हरिणा वक्षस्थलं स्पर्द्धते ।
चक्राङ्कञ्च यथा पदद्वयमिदं मन्ये तथा कोऽप्ययं
नो विद्याधरचक्रवर्त्तिपदवीमप्राप्य विश्राम्यति ॥१०॥ (ब)

अथवा कृतं सन्देहेन । अवश्यमेतेनैव जीमूतवाहनेन भवितव्यम् । मलयवतीं निरूप्य । अये ! इयमपि राजपुत्री । उभौ विलोक्य । चिरात् खलु युक्तकारी विधिः स्यात् । यदि युगलकमेतदन्योन्यानुरूपं घटयेत् (भ) । उपसृत्य नायकं निर्दिश्य । स्वस्ति भवते ।

नायकः भगवन् ! जीमूतवाहनोऽभिवादये । उत्थातुमिच्छति

तापसः । अलमलं अभ्युत्थानेन (म) । ननु सर्वस्याभ्या-

---

(ब) उष्णीष इति । मूर्द्धनि एषः स्फुटः समुज्ज्वलः उष्णीषः शिरोवेष्टनभूतः राजमुकुटविशेष इत्यर्थः विभाति विराजते, भ्रुवोः अन्तः मध्ये इयम् ऊर्णा रोमराजिरित्यर्थः, चक्षुः तामरसानुकारि रक्तोत्पलसदृशं वक्षस्थलं हरिणा मृगेन्द्रेण स्पर्द्धते मृगेन्द्रवत् विशालमिति भावः इदञ्च पदद्वयं यथा चक्राङ्कं चक्रचिह्नितञ्च, तथा मन्ये सम्भावयामि कोऽपि अयं पुरुषः विद्याधरचक्रवर्त्तिपदवीं विद्याधराधीश्वरत्वम् अप्राप्य नो विश्राम्यति न तिष्ठतीत्यर्थः अवश्यमेवायं विद्याधर चक्रवर्त्ती भविष्यतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(भ) युक्तकारी योग्ययोजनकारीत्यर्थः । युगलकं मिथुनम् । घटयेत् सङ्गमयेत् ।

(म) अभ्युत्थानेन उत्थाय अभ्यर्थनादिकरणम् अभ्युत्थानं तेन ।

यतो गुरुरिति भवानेवास्माकं पूज्यः। तद् यथासुखं स्थीयतां।

नायिका। अज्ज! पणमामि (१)।

तापसः। नायिकां निर्दिश्य। वत्से! अनुरूपभर्तृगामिनी भूयाः। राजपुत्रि! त्वामाह कुलपतिः कौशिकः। यथा अतिक्रामति मध्यन्दिनसवनवेला। तत् त्वरितमागम्यतामिति।

मलयवती। जं गुरू आणवेदि आत्मगतम्। एक्कत्तो गुरुवअणं अण्णत्तो दइअदंसणसुहंत्ति गमणागमणाधिरूढं (य) अज्जवि मं दोलएदि हिअअं (२)।

उत्थाय निश्वस्य सलज्जं सानुरागञ्च नायकं पश्यन्ती तापससहिता निष्क्रान्ता

नायकः। सोत्कण्ठं निश्वस्य, नायिकां पश्यन्

अनया जघनाभोगभरमन्थरयातया।

अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥२८॥(र)

---

(१) आर्य्ये! प्रणमामि।

(२) यद् गुरुराज्ञापयति। एकतो गुरुवचनमन्यतो दयितदर्शनसुखमिति गमनागमनाधिरूढमद्यापि मां दोलयति हृदयम्।

---

(य) गमनागमनाधिरूढं गमनम् आगमनञ्च अधिरूढं गन्तुकामम् आगन्तुकामञ्चेत्यर्थः।

(र) अनयेति। अनया जघनस्य आभोगभरेण विस्तारातिरेकेण मन्थरं मन्दं यातं गमनं यस्यास्तथाभूतया। अन्यतोऽपि अन्यत्र व्रजन्त्या गच्छन्त्या अपि मे मम हृदये पदं निहितं दत्तम्।

विदू। भो! दिट्ठं तुए पेक्खिदव्वं। ता दाणिं मज्झण्हसूरकिरणसन्तावदिउणिदो विअ मे उदरग्गी धमधमाअदि (ख)। ता एहि णिक्कमह्म। जेण बह्मणो अदिही भविअ मुणिजणसआसादो लद्धेहिं कन्दमूलफलेहिं पि दाव पाणधारणं करेमि। (१)।

नायकः। (ऊर्द्ध्वमवलोक्य।) मध्यमध्यास्ते नभस्तलस्य भगवान् सहस्रदीधितिः। तथाहि —

तापात् तत्क्षणघृष्टचन्दनरसौ पाण्डू कपोलौ वहन्
संसक्तैर्निजकर्णतालपवनैः संवीज्यमानाननः।
सम्प्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः शीकरैः
च्छायावृक्षकटुःसहामिव दशां धत्ते गजानां पतिः॥१८॥ (ग)

इति निष्क्रान्ताः सर्वे।

इति प्रथमोऽङ्कः।

---

(१) भो! दृष्टं त्वया प्रेक्षितव्यम्। तदिदानीं मध्याह्नसूर्यकिरणसन्तापद्विगुणित इव मे उदराग्निर्धमधमायते। तदेहि निष्क्रामावः। येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशात् लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करोमि।

---

(ख) प्रेक्षितव्यं द्रष्टव्यम्। मध्याह्नेति। मध्याह्ने सूर्यस्य किरणैः सन्तापात् द्विगुणित इव द्वैगुण्यं प्राप्त इव अतिवर्द्धित इत्यर्थः। धमधमायते ज्वलतीत्यर्थः।

(ग) तापादिति। एषः गजानां पतिः गजराजः तापात् हेतोः शैत्यलाभायेति भावः। तत्क्षणं घृष्टः मर्दितः चन्दनस्य तरोः रसः निर्यासः याभ्यां तादृशौ अतएव पाण्डू शुभ्रौ कपोलौ गण्डौ वहन् संसक्तैः सन्ततैः निजौ कर्णौ एव तालौ तालवृन्ते इत्यर्थः तयोः

# अथ द्वितीयोऽङ्कः।

ततः प्रविशति चेटी।

चेटी। आणत्तम्हि भट्टिदारिआए मलअवदीए जहा—हञ्जे! मणोहरिए अज्ज चिराअदि मे भाअरो अज्जमित्तावसू। ता गदुअ जाणीहि किं आगदो ण वेत्ति। परिक्रामति। नेपथ्याभिमुखं दृष्ट्वा का उण एसा तुरिततुरिदं इदो एव्व आअच्छदि। निरूप्य। कहं चदुरिआ? (१)।

ततः प्रविशति द्वितीया चेटी।

प्रथमा। उपसृत्य। हला चदुरिए! किं णिमित्तं उण मं परिहरिअ एव्वं तुरिदाए गच्छीअदि (२)।

---

(१) आज्ञप्तास्मि भर्तृदारकया मलयवत्या यथा हञ्जे मनोहारिके! अद्य चिरयति मे भ्राता आर्य्यमित्रावसुः। तद् गत्वा जानीहि किमागतो नवेति। का पुनरेषा त्वरितत्वरितमित एवागच्छति। कथं चतुरिका?।

(२) हला चतुरिके! किं निमित्तं पुनर्मां परिहृत्य एवं त्वरितया गम्यते।

---

पवनैः वायुभिः संवीज्यमानम् आननं यस्य तथाभूतः तथा हस्तेन शुण्डादण्डेन उज्झितैः क्षिप्तैः शीकरैः जलकणैः विशेषेण सिक्तं हृदयं वक्षःस्थलं यस्य तादृशः सन् बध्नाति म्लायतां म्लानिं गच्छतां पल्लवानां गजभग्नतरुविशेषाणां दुःसहामिव सोढुमशक्यामिव दशां धत्ते प्राप्नोति पल्लवा यथा गजैर्भज्यमाना नितरां दुर्दशां गच्छन्ति गजा अपि ग्रीष्मोत्तापेन तथेति भावः। शार्दूलविक्रीडितं वृत्तम्।

द्वितीया। हला मणोहरिए! प्राणत्तह्मि भट्टिदारिआए मलअवदीए हञ्जे चदुरिए! कुसुमावचअपरिस्समणीसहं मे सरीरं। सरदादवजणिदो विअ मे सन्दावो अधिअदरं बाधेदि। ता गच्छ तुमं बालकदलीपत्तपरिक्खित्ते चन्दणलदाघरए चन्दमणिसिलाअलं (क) सज्जीकरेहित्ति। अणुचिट्ठिअं अ मए जधा आणत्तं। ता गदुअ भट्टिदारिआए णिवेदेमि (३)।

प्रथमा। जइ एव्वं ता लहुं गदुअ णिवेदेहि। जेण से तहिंगदाए उवसमदि सन्दावो (४)।

द्वितीया। (विष्कम्भकगतम्) ण ईदिसो से सन्दावो। जो एव्वं उवसमिस्सदि। विचित्तरमणीअं चन्दणलदावरअं पेक्खन्तीए अधिअदरो सन्दावो हुविस्सदित्ति तक्केमि।

---

(३) हला मनोहरिके! आज्ञप्तास्मि भर्तृदारिकया मलयवत्या। हञ्जे चतुरिके! कुसुमावचयपरिश्रमनिःसहं मे शरीरम्। शरदातपजनित इव मे सन्तापोऽधिकतरं बाधते। तद् गच्छ त्वं बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुर्विति। अनुष्ठितञ्च मया यथाज्ञप्तम्। यावद् गत्वा भर्तृदारिकायै निवेदयामि।

(४) यद्येवं तल्लघु गत्वा निवेदय। येनास्यास्तत्र गताया उपशाम्यति सन्तापः।

---

(क) कुसुमेति। कुसुमानाम् अवचये चयने यः परिश्रमः तेन निःसहम् अवशं क्लान्तमित्यर्थः। बालकदलीति बालैः नवैः तरुणैरित्यर्थः कदलीपत्रैः परिक्षिप्ते आवृते। चन्द्रमणिशिलातलं चन्द्रकान्तपाषाणतलमित्यर्थः।

(प्रकाशम्)। ता गच्छ तुमं। अहम्पि सज्जीकिदं मणिसिला-अलंत्ति गदुअ भट्टदारिआए णिवेदेमि (५)।

इति निष्क्रान्ते।

ततः प्रविशति सोत्कण्ठा मलयवती चेटी च।

मलयवती (निःश्वस्यात्मगतम्)। हिअअ! तधा णाम तस्सिं जणे जं लज्जाए मन्थरं मुहं कदुअ दाणिं तहिं अत्तणा गदोसित्ति अहो! दे अप्पम्भरित्तणं (ख) (प्रकाशम्)। हञ्जे चदुरिए! आदेसेहि मे भअवदीए आअदणं (६)।

चेटी (आत्मगतम्)। चन्दणलदाघरं पत्थिदा भणादि भअ-वदिए आअदणं। (प्रकाशम्)। चन्दणलदाघरअं भट्टदारिआ पत्थिदा (७)।

नायिका (सलज्जम्)। हञ्जे! सुट्ठु सुमराविदं। ता एहि तहिं एव्व गच्छह्म (८)।

---

(५) नेदृशस्तस्याः सन्तापः। य एवमुपशमिष्यति। विचित्र-रमणीयं चन्दनलतागृहं प्रेक्षमाणाया अधिकतरः सन्तापो भविष्य-तीति तर्कयामि। तद्गच्छ त्वम् अहमपि सज्जीकृतं मणिशिलातल-मिति गत्वा भर्तृदारिकायै निवेदयामि।

(६) हृदय! तथा नाम तस्मिन् जने यत् लज्जया मन्थरं मुखं कृत्वेदानीं तत्रात्मना गतोऽसीति अहो! ते आत्मम्भरित्वम्। हञ्जे चतुरिके! आदिश मह्यं भगवत्या आयतनम्।

(७) चन्दनलतागृहं प्रस्थिता भणति भगवत्या आयतनम्। चन्दनलतागृहं भर्तृदारिका प्रस्थिता।

(८) हञ्जे! सुष्ठु स्मारितम्। तदेहि तत्रैव गच्छावः।

---

(ख) मन्थरं जडम् अवागित्यर्थः। आत्मम्भरित्वं स्वार्थपरत्वम्।

चेटी। एदु एदु भट्टिदारिआ। (९)

नायिका अन्यतो गच्छति।

चेटी। पृष्ठतो दृष्ट्वा सोद्वेगमात्मगतम्। अम्हो! से सुण्णहि-अअत्तणं। कहं तं एव्व देवीभवणं पत्थिदा। प्रकाशम् भट्टिदारिए! णं इदो चन्दणलदाघरअं ता इदो इदो एहि (१०)।

नायिका सविलक्षस्मितं (ग) तथा करोति।

चेटी। इदं चन्दणलदाघरअं। ता पविसिअ चन्दमणि-सिलादले उपविसिअ समस्ससदु भट्टिदारिआ (११) उभे-उपविशतः।

नायिका। निःश्वस्य आत्मगतम्। भअवं कुसुमाउह! जेण्ण तुमं रूअसोहाए णिज्जिदोसि। तस्स तुए ण किम्पि किदं। मम उण अणवरद्धाए वि अबलेत्ति करिअ पहरन्तो ण लज्जेसि आत्मानं निर्वर्ण्य मदनावस्थां नाटयन्ती। प्रकाशम्। हञ्जे! कीस उण घणपल्लवणिरुद्धसूरकिरणं (घ) तं एव्व

(९) एतु एतु भर्तृदारिका।

(१०) अहो तस्याः शून्यहृदयत्वम्। कथं तदेव देवीभवनं प्रस्थिता। भर्तृदारिके! नन्वितश्चन्दनलतागृहम्। तदित इत एहि।

(११) इदं चन्दनलतागृहम्। तत् प्रविश्य चन्द्रमणिशिलातले उपविश्य समाश्वसितु भर्तृदारिका।

(ग) सविलक्षस्मितं सलज्जस्मितम्।

(घ) घनपल्लवेति। घनैः निविडैः पल्लवैः निरुद्धा निवारिताः सूर्यस्य किरणा यस्मात् तथोक्तम्।

चन्दणलदाघरअं ण मे अज्जवि सन्दावदुक्खं अव-णेदि (१२)।

चेटी। जाणामि अहं एत्थ सन्दावस्स कारणं। किं उण असम्भाविणी भट्टिदारिआ ण तं पडिवज्जिस्स-दित्ति (क)। (१३)

नायिका। आत्मगतम्। लक्खिदा विअ अहं एदाए। तहावि पुच्छिस्सं। प्रकाशम्। हञ्जे! किं तं जं ण पडिव-ज्जिस्सदि। ता कहेहि दाव। किं तं कारणं? (१४)।

चेटी। एसो दे हिअअट्ठिदो वरो (१५)।

नायिका। सहर्षं ससम्भ्रमोत्थाय द्वित्राणि पदानि गत्वा कहिं कहिं सो? (१६)।

---

(१२) भगवन् कुसुमायुध! येन त्वं रूपशोभया निर्जितोऽसि। तस्य त्वया न किमपि कृतम्। मम पुनरनपराद्धाया अपि अबलेति कृत्वा प्रहरन् न लज्जसे। हञ्जे! किं पुनर्घनपल्लवनिरुद्धसूर्यकिरणं तदेव चन्दनलतागृहं न मे अद्यापि सन्तापदुःखमपनयति।

(१३) जानाम्यहमत्र सन्तापस्य कारणम्। किं पुनरसम्भाविनी भर्तृदारिका न तत् प्रतिपत्स्यते इति।

(१४) लक्षितेवाहमेतया। तथापि पृच्छामि। हञ्जे! किं तद् यन्न प्रतिपद्यते। तत् कथय तावत्। किं तत् कारणम्?

(१५) एष ते हृदयस्थितो वरः।

(१६) कुत्र कुत्र सः?

---

(क) सन्तापस्य कारणं जीमूतवाहनमिति भावः। किं पुनः किन्तु असम्भाविनी जीमूतवाहनो मे भर्ता भवितेति असम्भवं मन्यमानेत्यर्थः। तत् मदभिप्रेतम्। प्रतिपत्स्यते स्वीकरिष्यति।

चेटी । उत्थाय सस्मितम् । भट्टिदारिए ! सो को ? (१७) ।

नायिका । सलज्जमपविश्य अधोमुखी तिष्ठति ।

चेटी । भट्टिदारिए ! एदस्सि वत्तुकामा । एसो दे हिअअट्ठिदो वरो एव्व देवीए दिण्णो सिविणके । पच्छा वि क्खणं एव्व परिमुक्ककुसुमबाणो विअ (च) मअरद्धओ भट्टिदारिआए दिट्ठो । सो दे इमस्स सन्दावस्स कारणं जेण एदं सहावसीदलम्मि चन्दणलदाघरए ण दे सन्दावदुक्खं अवणेदि (१८) ।

नायिका । चदुरिआए लक्खिदम्हि । सच्चं हञ्जे ! चदुरिआ क्खु तुमं । किं दे अवरं पच्छादीअदि । ता कहिस्सं (१९) ।

चेटी । भट्टिदारिए ! दाणिं एव्व कहिदं । किं बहुणा पलविदेण । अलं सम्भमेण (छ) । मा सन्तप्प । जइ अहं

---

(१७) भर्तृदारिके ! स कः ?

(१८) भर्तृदारिके ! एतदस्मि वक्तुकामा । एष ते हृदयस्थितो वर एव देव्या दत्तः स्वप्ने । पश्चादपि क्षणमेव प्रविमुक्तकुसुमबाण इव मकरध्वजो भर्तृदारिकया दृष्टः । स ते अस्य सन्तापस्य कारणम् । येनैतत् स्वभावशीतलमपि चन्दनलतागृहं न ते सन्तापदुःखमपनयति ।

(१९) चतुरिकया लक्षितास्मि । सत्यं हञ्जे ! चतुरिका खलु त्वम् । किं ते अपरं प्रच्छाद्यते । तत् कथयिष्यामि ।

---

(च) पश्चादपि स्वप्नदर्शनानन्तरमपीत्यर्थः । प्रविमुक्तेति प्रविमुक्ताः प्रक्षिप्ताः कुसुमबाणाः येन तादृश इव ।

(छ) सम्भ्रमेण शङ्कया ।

चदुरिआ तदा सोवि भट्टिदारिअं अवेक्खन्तो ण मुहुत्तअं-
पि अहिरमिस्सदि (ज)। ता एदम्पि मए लक्खिदं (२०)।

नायिका। सास्रम्। हञ्जे! कुदो अम्हाणं एत्तिओ
भाअधेओ (२१)।

चेटी। भट्टिदारिए! मा एव्वं भण। किं महुसूअणो
विअ वच्छत्थलेण लच्छिं अणुव्वहन्तो णिव्वुदो भोदि (२२)।

नायिका। किं सुअणो पिअं वज्जिअ अण्णं भणिदुं
जाणेदि। सहि! अदोवि मे सन्दावो अधिअदरं बाधेदि।
जं सो महाणुभाओ वाआमेत्तकेण वि मए ण सम्भाविदो
सोवि अकिदपडिवत्ती अदक्खिणेत्ति (झ) मं सम्भावइ-
स्सदि (२३) इति रोदिति।

---

(२०) भर्तृदारिके! इदानीमेव कथितम्। किं बहुना प्रलपितेन
अलं सम्भ्रमेण मा सन्तप्यस्व। यदुक्तं चतुरिका तदा सोऽपि भर्तृ-
दारिकाम् अपेक्षमाणो न मुहूर्तमप्यभिरंस्यते। तदिदमपि मया
लक्षितम्।

(२१) हञ्जे! कुतोऽस्माकमेतावद्भागधेयम्?

(२२) भर्तृदारिके! मैवं भण। किं मधुसूदन इव वक्षःस्थलेन
लक्ष्मीमनुद्वहन् निर्वृतो भवति।

(२३) किं सुजनः प्रियं वर्जयित्वा अन्यत् भणितुं जानाति।
सखि! अतोऽपि मे सन्तापोऽधिकतरं बाधते। यत् स महानुभावो
वाङ्मात्रेणापि मया न सम्भावितः। सोऽप्यकृतप्रतिपत्तिरदक्षिणेति
सम्भावयिष्यति।

---

(ज) अभिरंस्यते न सुस्थिरो भविष्यतीत्यर्थः।

(झ) अकृतप्रतिपत्तिः अकृतसत्कारः। अदक्षिणा अनुदारा
अविनीतेत्यर्थः।

चेटी। भट्टिदारिए! मा रोद। अहवा कहं ण रोदिस्सदि। अहिओ से हिअअस्स सन्दावो अधिअदरं बाधेदि। ता किं दाणीं एत्थ करइस्सं। ता जाव चन्दणलदापल्लवरसं से हिअए दाइस्सं। उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य हृदये ददाति। भट्टिदारिए! णं भणामि मा रोद। अअं क्खु ईदिसो चन्दणरसो इमेहिं अणवरपडन्तेहिं बाहबिन्दूहिं उण्हीकिदो ण दे हिअअस्स एदं सन्दावं अवणेदि (२४)। कदलीपत्रमादाय वीजयति।

नायिका। हस्तेन निवारयन्ती। सहि! मा वीजेहि। उण्हो क्खु एसो कदलीदलमारुदो (२५)।

चेटी। भट्टिदारिए! मा इमस्स दोसं करेहि। तुमं चिअ चन्दपल्लवसंसग्गसीदलं इमं णीसासेहिं पपाविअ (अ) कअलीदलमारुदं उण्हं कुणासि (२६)।

---

(२४) भर्तृदारिके! मा रुदिहि। अथवा कथं न रोदिष्यति। अधिकोऽस्या हृदयस्य सन्तापोऽधिकतरं बाधते। तत् किमिदानीमत्र करिष्ये। तद् यावत् चन्दनलतापल्लवरसमस्या हृदये दास्ये। भर्तृदारिके! ननु भणामि मा रोदीः। अयं खल्वीदृशश्चन्दनरस एभिरनवरतपतद्भिर्बाष्पबिन्दुभिरुष्णीकृतो न ते हृदयस्य एतं सन्तापमपनयति।

(२५) सखि! मा वीजय। उष्णः खल्वेष कदलीदलमारुतः।

(२६) भर्तृदारिके! मा अस्य दोषं कथय। त्वं चित्तचन्दनपल्लवसंसर्गशीतलम् इमं निःश्वासैः प्रपाय्य कदलीदलमारुतम् उष्णं करोषि।

---

(अ) चितेति। चितस्य पातितस्य चन्दनपल्लवस्य संसर्गेण सम्पर्केण शीतलं कदलीदलमारुतं कदलीपत्रवातं निःश्वासैः प्रपाय्य संयोज्य।

नायिका। सास्रम्। सहि! अत्थि कोवि इमस्स दुक्खस्स उवसमोवाओ (२७)।

चेटी। भट्टिदारिए! अत्थि जदि सो एत्थ आअच्छदि (२८)।

ततः प्रविशति नायको विदूषकश्च।

नायकः।

व्यावृत्त्यैव सितासितेक्षणरुचा तानाश्रमे शाखिनः
कुर्वन्त्या विटपावसक्तविलसत्कृष्णाजिनौघानिव।
यद्दृष्टोऽस्मि तया मुनेरपि पुरस्तेनैवमभ्याहते
पुष्पेषो! भवता मुधैव किमिति क्षिप्यन्त एते शराः॥ (२०)(ट)

विदू। भो वअस्स! कहिं क्खु दे गदं तं धीरत्तणं? (२९)

नायकः। वयस्य! ननु सुधीर एवास्मि, कुतः—

---

(२७) सखि! अस्ति कोऽपि अस्य सन्तापस्योपशमोपायः।

(२८) भर्तृदारिके! अस्ति यदि सोऽत्रागच्छति।

(२९) भो वयस्य! कुत्र खलु ते गतं तत् धीरत्वम्?

---

(ट) व्यावृत्त्येति। हे पुष्पेषो! कुसुमशर! मुनेरपि पुरः अग्रतः यया कान्तया सितञ्च असितं नीलञ्च यत् ईक्षणं नेत्रं तस्य रुचा कान्त्या आश्रमे तान् शाखिनः वृक्षान् विटपेषु शाखासु अवसक्ताः संलग्नाः विलसन्तः स्फुरन्तः कृष्णाजिनानां कृष्णसारचर्मणां ओघाः सङ्घाता येषां तथाविधानिव कुर्वन्त्या तया व्यावृत्य परावृत्य दृष्टानिति शेषः दृष्टोऽस्मि यत् तेन परावृत्त्य दर्शनेन एव एवम् इत्थम् अभ्याहते ताडिते कटाक्षबाणप्रहृते इति भावः मयीति शेषः भवता मुधैव व्यर्थमेव किमिति कथम् एते शराः क्षिप्यन्ते पात्यन्ते? प्रहृते प्रहारो न युक्त इति भावः। शार्दूलविक्रीडितं वृत्तम्।

नीताः किं न निशाः शशाङ्कधवलाः नाघ्रातमिन्दीवरम्
किं नोन्मीलितमालती सुरभयः सोढाः प्रदोषानिलाः ।
झङ्कारः कमलाकरे मधुलिहां किं वा मया न श्रुतो
निर्व्याजं विधुरेष्वधीर इति मां येनाभिधत्ते भवान् ॥२१॥(ठ

विचिन्त्य । अथवा मृषा नाभिहितं, वयस्यात्रेय ! नन्वधीर एवास्मि—

स्त्रीहृदयेन न सोढाः क्षिप्ताः कुसुमेषवोऽप्यनङ्गेन ।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम् ॥२२॥ (ड)

विदू । आत्मगतम् । एव्वमधीरत्तणं पडिवज्जन्तेण भाव-

---

(ठ) नीता इति । शशाङ्कधवलाः चन्द्रकिरणोज्ज्वला निशाः रजन्यः किं न नीताः नातिवाहिताः ? अतिवाहिता एवेत्यर्थः मयेति सर्वत्र योज्यम् । इन्दीवरं नीलोत्पलं न आघ्रातम् ? अपितु आघ्रातमेवेत्यर्थः । उन्मीलिता विकसिता या मालत्यः ताभिः सुरभयः सुगन्धाः प्रदोषानिलाः निशावायवः किं न सोढाः अपितु सोढा एवेत्यर्थः । कमलाकरे सरसि मधुलिहां भ्रमराणां झङ्कारः ध्वनिविशेषः किं वा न श्रुतः । अपितु श्रुत एवेत्यर्थः येन भवान् मां विधुरेषु कातरेषु अधीरेष्वित्यर्थः मध्ये अधीर इति अधीरतम इत्यर्थः निर्व्याजं निष्कपटं निश्चितमित्यर्थः अभिधत्ते कथयति । एतावति धीरत्वेऽपि मम अधीरत्वकथनमयुक्तमिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ड) स्त्रीहृदयेनेति । मयेत्यध्याहार्यम् । स्त्रीहृतेन कान्तागतमनसा मया अनङ्गेन क्षिप्ताः कुसुमेषवः पुष्पमयाः शरा अपि न सोढाः येन अद्यैव तव पुरः अग्रतः सः असोढपुष्पशरः अहं धीरः अहमिति येन: इति कथं वदामि ? त्वत्समीपे मम धीरत्वप्रकटनमयुक्तमिति भावः । आर्यावृत्तम् ।

किदो महन्तो अणेण हिअअस्स आवेगो, ता जाव कहिं एव्व एदं अवक्खिवामि, (ठ) प्रकाशम्। भो वअस्स! कीस उण अज्ज तुमं लहुं जेव्व गुरुअणं सुस्सूसिअ इह आगदो? (२०)।

नायकः। वयस्य! स्थाने प्रश्नः, कस्य वान्यस्यैतत् कथनीयम्, यदा खलु स्वप्ने जानामि—सैव प्रियतमा। अङ्गुल्या निर्दिशन्। अत्र चन्दनलतागृहे चन्द्रकान्तमणि शिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव (ण) रुदती मया दृष्टा, तदिच्छामि स्वप्नानुभूतदयितासमागमरम्ये अस्मिंश्चन्दनलतागृहे दिवसशेषं समतिवाहयितुम्, तदेहि गच्छावः। परिक्रामतः।

चेटी। कर्णं दत्त्वा ससम्भ्रमम्। भट्टिदारिए! पदसद्दो विअ (२१)।

नायिका। ससाध्वसमात्मानं पश्यन्ती। हञ्जे! मा ईदिसं आआरं पेक्खिअ कोवि मे हिअअं तुलइस्सदि (त) ता

---

(२०) एवमधीरत्वं प्रतिपाद्यमानेन आपन्नो महाननेन हृदयस्यावेगः। तत् यावत् कुत्रैव एनम् अपक्षिपामि, भो वयस्य! कथं पुनरद्य त्वं लघ्वेव गुरुजनं शुश्रूषित्वा इहागतः?

(२१) भर्तृदारिके! पदशब्द इव।

---

(ठ) अपक्षिपामि कस्मिन् विषये एनं व्याक्षिप्तहृदयं करोमि येनास्य विस्मरणेन क्षणमपि कियत्क्षणं विनोदः स्यादिति भावः।

(ण) उपालभमानेव अधिक्षिपन्तीव।

(त) तुलयिष्यति ज्ञास्यति।

उट्ठेहि, इमिणा रत्तासोअपादवेण अन्तरिदाअ पेक्खम्ह दाव को एसोत्ति। (२२) तथा कुरुतः।

विदू। एदं चन्दणलदाघरअं। ता एहि पविसम्ह (२३)।

नाट्येन प्रविशतः।

नायकः।

चन्दनलताग्टहमिदं सचन्द्रमणिशिलमपि प्रियं न मम।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः॥२३॥ (थ)

चेटी हद्धी। भट्टिदारिए! दिट्ठिआ वड्ढसि। सो एव्व णं दे हिअअवल्लहो जणो (२४)।

नायिका। हद्धी सहर्षं ससाध्वसञ्च। हञ्जे! एदं पेक्खिअ अदिसज्झसेण ण सक्कणोमि इह एव्व आसणे चिट्ठिदुं, कदावि एसो पेक्खदि, ता एहि अण्णदो गच्छम्ह। स्तोकमात्रं पदं गत्वा। हञ्जे! वेवदि मे ऊरू (२५)।

---

(२२) हञ्जे! मा ईदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति, तदुत्तिष्ठ, अनेन रक्ताशोकपादपेन अन्तरिते प्रेक्षावहे तावत् क एष इति।

(२३) इदं चन्दनलताग्टहम्। तदेहि प्रविशावः।

(२४) भर्तृदारिके! दिष्ट्या वर्द्धसे? स एव ननु ते हृदयवल्लभो जनः।

(२५) हञ्जे! एनं प्रेक्ष्य अतिसाध्वसेन न शक्नोमि इहैवासने स्थातुम्, कदापि एष प्रेक्षते। तदेहि अन्यतो गच्छावः। हञ्जे! वेपते मे ऊरुः।

---

(थ) चन्दनेति। चन्द्रिकया ज्योत्स्नया रहितं निशाया मुखमिव प्रारम्भ इव चन्द्राननया तया कान्तया रहितम् इदं चन्दनलताग्टहं चन्द्रमणिशिलया चन्द्रकान्तपाषाणेन सहितमपि मम प्रियं न।

चेटी। विहस्य। अइ कादरे! इह ठिदं तुमं को पेक्खदि? णं विसुमरिदो दे अअं रत्ताओअपादवो, ता इह एव्व उवविसिअ चिट्ठम्ह (२६)। तथा कुरुतः।

विदू। निरूप्य भो वअस्स! एसा सा चन्दमणि-सिला? (२७)।

नायकः। सवाष्पं निःश्वसिति।

चेटी। भट्टिदारिए! जाणामि सिविणआलाओ विअ। ता अवहिदा दाव सुणम्ह (२८)। उभे आकर्णयतः।

विदू। हस्तेन चालयन्। भो वअस्स! णं भणामि एसा सा चन्दमणिसिलेत्ति (२९)।

नायकः। सवाष्पं निःश्वस्य। सम्यगुपलक्षितम्। हस्तेन निर्दिश्य।

शशिमणिशिला सेयं यस्यां विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा।
चिरयति मयि व्यक्ताकूता मनाक् स्फुरिताधरा
विरमितमनोमन्युर्दृष्टा मया रुदती प्रिया॥ २४ ॥ (ट)

---

(२६) अयि कातरे! इह स्थितां त्वां कः प्रेक्षते? ननु विस्मृतस्ते अयं रक्ताशोकपादपः, तदिहैव उपविश्य तिष्ठावः।

(२७) भो वयस्य! एषा सा चन्द्रमणिशिला।

(२८) भर्त्तृदारिके! जानामि स्वप्नालाप इव, तदवहिते तावच्छृणुवः।

(२९) भो वयस्य! ननु भणामि। एषा सा चन्द्रमणिशिलेति।

---

(ट) शशिमणिशिलेति। सा इयं शशिमणिशिला, चन्द्रकान्तशिला यस्यां शिलायां मयि चिरयति विलम्बमाने वामे करकिसलये प्रिया

उट्ठेहि, इमिणा रत्तासोअपादवेण अन्तरिदाअ पेक्खम्ह-दाव को एसोत्ति । (३२) तथा कुरुतः ।

विदू । एदं चन्दणलदाघरअं । ता एहि पविसम्ह (३३) ।

नाट्येन प्रविशतः ।

नायकः ।

चन्दनलतागृहमिदं सचन्द्रमणिशिलमपि प्रियं न मम ।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः ॥२३॥ (थ)

चेटी दृष्ट्वा । भट्टिदारिए ! दिट्ठिआ वड्ढसि । सो एव्व णं दे हिअअवल्लहो जणो (३४) ।

नायिका । दृष्ट्वा सहर्षं ससाध्वसञ्च । हञ्जे ! एदं पेक्खिअ अदिसज्झसेण ण सक्कुणोमि इह एव्व आसणे चिट्ठिदुं, कदापि एसो पेक्खदि, ता एहि अण्णदो गच्छम्ह । सोत्कम्पं पदं गत्वा । हञ्जे ! वेवदि मे ऊरू (३५) ।

---

(३२) हञ्जे ! मा ईदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति, तदुत्तिष्ठ, अनेन रक्ताशोकपादपेन अन्तरिते प्रेक्षावहे तावत् क एष इति ।

(३३) इदं चन्दनलतागृहम् । तदेहि प्रविशावः ।

(३४) भर्तृदारिके ! दिष्ट्या वर्द्धसे ? स एव ननु ते हृदयवल्लभो जनः ।

(३५) हञ्जे ! एनम्प्रेक्ष्य अतिसाध्वसेन न शक्नोमि इहैवासने स्थातुम्, कदापि एष प्रेक्षते । तदेहि अन्यतो गच्छावः । हञ्जे ! वेपते मे ऊरुः ।

---

(थ) चन्दनेति । चन्द्रिकया ज्योत्स्नया रहित निशाया मुखमिव प्रारम्भ इव चन्द्राननया तया कान्तया रहितम् इदं चन्दनलतागृहं चन्द्रमणिशिलया चन्द्रकान्तपाषाणेन सहितमपि मम प्रियं न ।

चेटी। विहस्य। अइ कादरे! इह ट्ठिदं तुमं को पेक्खदि? णं विसुमरिदो दे अअं रत्तासोअपादवो, ता इह एव्व उवविसिअ चिट्ठम्ह (३६)। तथा कुरुतः।

विदू। निरूप्य भो वअस्स! एसा सा चन्दमणि-सिला? (३७)।

नायकः। सव्यथं निःश्वसिति।

चेटी। भट्टिदारिए! जाणामि सिविणआलाओ विअ। ता अवहिदा दाव सुणम्ह (३८)। उभे आकर्णयतः।

विदू। हस्तेन चालयन्। भो वअस्स! णं भणामि एसा सा चन्दमणिसिलेत्ति (३९)।

नायकः। सविमर्शं निरूप्य। सम्यगुपलक्षितम्। हस्तेन निर्दिश्य।

शशिमणिशिला सेयं यस्यां विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा।
चिरयति मयि व्यक्ताकूता मनाक् स्फुरिताधरा
निभृतनयनामन्युद्दृष्टा मया रुदती प्रिया॥ २४॥ (द)

(३६) अयि कातरे! इह स्थितां त्वां कः प्रेक्षते? ननु विस्मृतस्ते अयं रक्ताशोकपादपः, तदिहैव उपविश्य तिष्ठावः।

(३७) भो वयस्य! एषा सा चन्द्रमणिशिला।

(३८) भर्तृदारिके! जानामि स्वप्नालाप इव, तदवहिते तावच्छृणुवः।

(३९) भो वयस्य! ननु भणामि। एषा सा चन्द्रमणिशिलेति।

(द) शशिमणिशिलेति। सा इयं शशिमणिशिला, चन्द्रकान्तशिला यस्यां शिलायां मयि चिरयति विलम्बमाने वामे करकिसलये विपा

नायकः। वयस्य ! जाने तामेवास्यां शिलायामालिख्य मया चित्रगतया आत्मानं विनोदयामीति, तदित एव गिरितटान्मनःशिलाशकलान्यादायागच्छ (प)।

विदू। जं भवं आणवेदि। परिक्रम्य गृहीत्वोपसृत्य। भो वअस्स ! तुए एक्को वण्णओ आणत्तो, मए उण इह एव्व सुलहपञ्चराइणो वण्णआ आणीदेत्ति, आलिहदु भवं (४८)।

उपनयति।

नायकः। वयस्य ! साधु कृतम्। गृहीत्वा। शिलायामालिखन् सरोमाञ्चम्। सखे ! पश्य—

आक्लिष्टबिम्बशोभाधरस्य नयनोत्सवस्य शशिन इव।
दयितामुखस्य सुखयति रेखापि प्रथमदृष्टेयम् ॥ २६ ॥ (फ)

लिखति।

विदू। सकौतुकं निर्वर्ण्य। अपच्चक्खेवि एव्व णाम रूअं लिहीअदि, अहो अच्छरिअं ! ! (४९)।

---

(४८) यद्भवान् आज्ञापयति, भो वयस्य ! त्वया एको वर्ण आज्ञप्तः मया पुनरिहैव सुलभपञ्चरागका वर्णा आनीता इति आलिखतु भवान्।

(४९) अप्रत्यक्षेऽपि एवं नाम रूपं लिख्यते, अहो आश्चर्य्यम्।

---

(प) मनःशिलाशकलानि मनःशिलाख्यधातुखण्डान्।

(फ) आक्लिष्टेति। दयितायाः प्रियाया मुखस्य शशिन इव चन्द्रस्येव नयनोत्सवस्य नेत्रानन्दिनः अधरस्य आक्लिष्टा अनुगता बिम्बस्येव तदाख्यफलस्येव शोभा यस्यां तादृशी प्रथमदृष्टा सकृदवलोकिता इयं रेखापि सुखयति आनन्दयति। आर्य्यावृत्तम्।

नायकः । सस्मितम् । वयस्य !—

प्रिया सन्निहितैवेयं सङ्कल्पस्थापिता पुरः ।
दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत् कोऽत्र विस्मयः ॥२७॥ (ब)

नायिका । सास्रम् । चदुरिए ! जाणिदं क्खु कहावसाणं, ता एहि दाव मित्तावसुं पेक्खम्ह (५०)

चेटी । सविषादमात्मगतम् । जीविदणिरवेक्खो विम्र से उल्लावो । (भ) प्रकाशम् । भट्टदारिए ! णं गदा एव्व तहिं मणोहारिणा, ता कदावि भट्टा मित्तावसू इह एव्व णाअच्छदि (५१) ।

ततः प्रविशति मित्रावसुः ।

मित्रा । आज्ञापितोऽस्मि तातेन, यथा वत्स मित्रा-वसो ! जीमूतवाहनोऽस्माभिरिहासन्नभावान् सुपरीक्षि-

---

(५०) चतुरिके ! ज्ञातं खलु कथावसानं, तदेहि तावन्मित्रावसुं प्रेक्षावहे ।

(५१) जीवितनिरपेक्ष इवास्या उल्लापः । भर्तृदारिके ! ननु गतैव तत्र मनोहारिका, तत् कदापि भर्ता मित्रावसुरिहैवागच्छति ।

---

(ब) प्रियेति । पुरः अग्रतः संकल्पेन मानसकल्पनया स्थापिता अतएव सन्निहितैव समीपवर्त्तिन्येव प्रिया, अतः दृष्ट्वा दृष्ट्वा सङ्कल्पस्थापितामिति शेषः यदि लिखामि तत् तदा अत्र लिखने को विस्मयः आश्चर्य्यम्, नैवाश्चर्य्यमित्यर्थः ।

(भ) जीवितनिरपेक्षः जीवनाकाङ्क्षारहितः । उल्लापः आलापः वचनमित्यर्थः यदि एनं प्रियजनं न प्राप्नोति तदा जीवितं त्यक्ष्यतीय-मिति भावः ।

सोऽयं, कुतोऽस्मायोग्यो वरः, तदस्मै वत्सा मलयवती प्रतिपाद्यतामिति, अहन्तु स्नेहपराधीनतया अन्यदेव किमप्यवस्थान्तरमनुभवामि (म)। अन्यच्च,

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां सम्मतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान् विनीतो युवा।
यच्चासूनपि सन्त्यजेत् करुणया सत्त्वार्थमभ्युद्यत-
स्तेनास्मै ददतः स्वसारमतुलां तुष्टिर्विषादश्च मे ॥२८॥ (य)

श्रुतञ्च, यथा—जीमूतवाहनो गौर्य्याश्रमसम्बद्धे चन्दनलतागृहे वर्त्तत इति, तदेतत् चन्दनलतागृहं यावत् प्रविशामि। प्रविशति।

विदू। सहर्षम् अवलोक्य। भो वयस्स! पच्छादेहि

---

(म) आसन्नभावात् निकटस्थितत्वात् सुपरीक्षितः वरत्वेनेति भावः। प्रतिपाद्यतां समर्प्यताम्। स्नेहपराधीनतयेत्यादि परिणीता वत्सा मलयवती मां त्यक्त्वा भर्त्तृगृहं गमिष्यतीति स्नेहकातरतां गतोऽस्मीति भावः।

(य) यदिति। विद्याधरराजवंशतिलकः प्राज्ञः बुद्धिमान् सतां साधूनां सम्मतः रूपेण अप्रतिमः अतुल्यः पराक्रमधनः महावीर इत्यर्थः विनीतः विनयसम्पन्नः युवा इति यत् तथा करुणया अनुकम्पया सत्त्वार्थं प्राणिरक्षणार्थम् अभ्युद्यतः उद्युक्तः सन् असून् प्राणानपि सन्त्यजेदिति यत् तेन उक्तद्विविधेन हेतुना अस्मै जीमूतवाहनाय अतुलां निरुपमां स्वसारं भगिनीं ददतो मे मम तुष्टिः हर्षः विषादश्च भवतीति शेषः अतिसुपात्रे अस्मिन् भगिनीदाने हर्षः, कस्यापि जीवनाय स्वजीवनदाने भगिन्या वैधव्यापत्तिरिति विषाद इति भावः। शार्दूलविक्रीडितं वृत्तम्।

इमिणा कअलीवत्तेण इमं चित्तगदं कस्सअं, एसो क्खु सिद्धजुवराओ मित्तावसू इह आगदो कदापि पेक्खि-स्सदि (५२)।

नायकः। कदलीपत्रेण प्रच्छादयति।

मित्रा। प्रविश्य। कुमार! मित्रावसुः प्रणमति।

नायकः। दृष्ट्वा। मित्रावसो! स्वागतम्, इतःस्थीय-ताम्।

चेटी। भट्टिदारिए! आअदो भट्टा मित्तावसू (५३)।

नायिका। हञ्जे! पिअं मे (५४)।

नायकः। मित्रावसो! अपि कुशली सिद्धराजो विश्वावसुः?।

मित्रा। कुशली तातसन्देशेनास्मि त्वत्सकाशमागतः।

नायकः। किमाह तत्रभवान्?।

नायिका। सुणिस्सं दाव—किं तादेण कुसलं संदिट्ठं त्ति (५५)!

मित्रा। सास्त्रं। इदमाह। तात, अस्ति मे मलयवती नाम कन्या जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य, सा मया तुभ्यं प्रतिपाद्यते। प्रतिगृह्यतामिति।

---

(५२) भो वयस्य! प्रच्छादय अनेन कदलीपत्रेण इमां चित्रगतां कन्यकाम्, एष खलु सिद्धयुवराजो मित्रावसुरिहागतः कदापि प्रेक्षि-ष्यते।

(५३) भर्तृदारिके! आगतो भर्त्ता मित्रावसुः।

(५४) हञ्जे! प्रियं मे।

(५५) श्रोष्यामि तावत्। किं तातेन कुशलं सन्दिष्टमिति।

चेटी। विहस्य। भट्टिदारिए! किं ण कुप्पसि दाणीं (५६)।

नायिका। सस्मितं सलज्जञ्च अधोमुखी स्थिता। हञ्जे! मा हस, किं विसुमरिदं दे एदस्स अस्महिअअत्तणं (५७)

नायकः। अपवार्य। वयस्य! सङ्कटे पतिताः स्मः।

विदू। अपवार्य। भो! जाणामि, ण तं वज्जिअ दे अण्णहिं चित्तं अहिरमेदि, जधा तधा जं किम्पि भणिअ विसज्जीअदु एसो (५८)।

नायिका। सरोषमात्मगतम्। हदास! को वा एदं ण जाणादि (५९)।

नायकः। क इह नेच्छेद् भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम्, किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्त्तयितुं, ततो नाहमेनां प्रतिग्रहीतुमुत्सहे।

नायिका। मूर्च्छां नाटयति।

चेटी। समस्ससदु समस्ससदु भट्टिदारिआ (६०)।

विदू। भो! पराधीणो क्खु एसो, किं एदिणा अब्भत्थिदेण, ता गुरुअणं से गदुअ अब्भत्थेहि (६१)।

---

(५६) भर्तृदारिके! किं न कुप्यसीदानीम्?

(५७) हञ्जे! मा हस किं विस्मृतं ते एतस्यान्यहृदयत्वम्?

(५८) भोः! जानामि, न तां वर्जयित्वा ते अन्यत्र चित्तमभिरमते, यथा तथा यत् किमपि भणित्वा विसर्ज्यतामेषः।

(५९) हताश! को वा एतन्न जानाति।

(६०) समाश्वसितु समाश्वसितु भर्तृदारिका।

(६१) भोः! पराधीनः खलु एष, किमनेनाभ्यर्थितेन। तद्गुरुजनमस्य गत्वा अभ्यर्थय।

मित्रा । आत्मगतम् । साधूक्तम्, नायं गुरुजनमतिक्रामति एष गुरुरप्यस्मिन्नेव गौर्य्याश्रमे प्रतिवसति, तद् यावद्गत्वा अस्य पित्रा मलयवतीं ग्राहयामि ।

नायिका । सनिश्वसिति ।

मित्रा । एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाणः (१) कुमार एव बहुतरं जानाति ।

नायिका । सरोषं विहस्य । कहं पच्चक्खाणलहू मित्तावसू पुणोवि मन्तेदि (६२) ।

मित्रावसुर्निष्क्रान्तः ।

नायिका । आत्मगतम् सास्रमात्मानं पश्यन्ती । किं मम एदिणा दोहग्गकलङ्कमइलेण अच्चन्तदुक्खभाइणा अज्जवि सरीरेण धारिदेण, ता इह ज्जेव असोअपाअवे इमाए अदिमुत्तलदाए उब्बन्धिअ अत्ताणं वावादइस्सं, ता एदं एव्व दाव । प्रकाशं विलक्षस्मितेन । हञ्जे ! पेक्ख दाव मित्तावसू गदो ण वेत्ति जेण अहम्पि इदो गमिस्सं (६३) ।

चेटी । कतिचित् पदानि गत्वा अवलोक्य आत्मगतम् ।

---

(६२) कथं प्रत्याख्यानलघु मित्रावसुः पुनरपि मन्त्रयति ।

(६३) किं मम एतेन दौर्भाग्यमलिनेन अत्यन्तदुःखभागिना अद्यापि शरीरेण धारितेन, तदिहैव अशोकपादपे अनया अतिमुक्तलतया उद्बध्य आत्मानं व्यापादयिष्यामि, तदिदमेव तावत्, हञ्जे ! प्रेक्षस्व तावत् मित्रावसुर्गतो न वेति येन अहमपि इतो गमिष्यामि ।

---

(१) प्रत्याचक्षाणः परिहरन् ।

अस्सारिसं से हिअअं पेक्खामि, ता ण गमिस्सं। इध ज्जेव्व ओवारिदा पेक्खामि किं एसा पडिवज्जदित्ति (६४)।

नायिका। दिशोऽवलोक्य पाशं कण्ठे कृत्वा साम्रम्। भअवदि गोरिए! तुए इह ण किदो (ल) ता अस्सिम्पि जम्मन्तरे जधा ण ईदिसी दुक्खभाइणी होमि तधा करेसि (६५)। इत्यभिधाय कण्ठे पाशमर्पयति।

चेटी। दृष्ट्वा ससम्भ्रममुपसृत्य। परित्ताअदु परित्ताअदु अज्जो, एसा भट्टिदारिआ उब्बन्धिअ अत्ताणअं वावादेदि (६६)।

नायकः। ससम्भ्रममुपसृत्य। कासौ? कासौ?।

चेटी। इअं असोअपादवे (६७)।

नायकः। सहर्षमवलोक्य। सैवेयमस्मन्मनोरथभूमिः।

नायिकां पाणौ गृहीत्वा लतापाशमाक्षिपति।

न खलु न खलु मुग्धे! साहसं कार्य्यमीदृक्
व्यपनय करमेतं पल्लवाभं लतायाः।

---

(६४) अन्यादृशमस्या हृदयं प्रेक्षे, तन्न गमिष्यामि इहैवापवारिता प्रेक्षे किमेषा प्रतिपद्यते इति।

(६५) भगवति! गौरि! त्वया इह न कृतः, तदन्यस्मिन्नपि जन्मान्तरे यथा न ईदृशी दुःखभागिनी भवामि तथा करिष्यसि।

(६६) परित्रायतां परित्रायतामार्य्यः, एषा भर्त्तृदारिका उद्बध्य आत्मानं व्यापादयति।

(६७) इयमशोकपादपे।

---

(ल) इह अस्मिन् जन्मनि न कृतः प्रसाद इति शेषः।

कुसुममपि विचेतुं यो न मन्ये समर्थः,

कलयति स कथन्ते पाशमुद्बन्धनाय॥ २९॥ (व)

नायिका। ससाध्वसम्। हद्धी! को उण एसो?। निरूप्य सरोषं हस्तमाक्षेप्तुमिच्छति। मुञ्च मुञ्च अग्गहत्थम्, को तुमं णिवारेदुं। मरणेवि किं तुमं ज्जेव्व पव्भट्ठणीओ (६८)। (श)

नायकः।

कण्ठे हारलतायोग्ये येन पाशस्त्वयार्पितः।

गृहीतः सापराधोऽयं कथन्ते मुच्यते करः॥ ३०॥ (ष)

विदू। भोदु, किं उण से इमस्स मरणव्ववसायस्स (स) कारणं? (६९)।

---

(६८) हा धिक्! कः पुनरेषः?। मुञ्च मुञ्चाग्रहस्तम्, कस्त्वं निवारयितुम्। मरणेऽपि किं त्वमेवाभ्यर्थनीयः।

(६९) भवतु, किं पुनरस्या अस्य मरणव्यवसायस्य कारणम्?

---

(व) नेति। हे मुग्धे सुन्दरि! ईदृशं साहसम् यां(?)अप्रियकारित्वं न खलु नैव न खलु नैव कार्यं कर्त्तव्यं त्वयेति शेषः एतं पल्लवाभं किसलयनिभं करं लतायाः सकाशात् व्यपनय अपसारय। यस्ते करः कुसुममपि विचेतुं न समर्थ इति मन्ये स ते करः कथम् उद्बन्धनाय पाशं कलयति गृह्णाति। मालिनीवृत्तं न नमययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्।

(श) अभ्यर्थनीयः प्रार्थनीयः।

(ष) कण्ठे इति। त्वया येन करेण हारलतायोग्ये मुक्ताहारोचिते कण्ठे पाशः अर्पितः, सापराधः कृतापराधः स ते तव करः गृहीतः मयेति शेषः कथं मुच्यते त्यज्यते, अपराधी गृहीतो विना दण्डं न मोच्य इति भावः।

(स) मरणव्यवसायस्य मरणोद्योगस्य।

चेटी । णं एसो एव्व ते पिअवअस्सो (७०) ।

नायकः । कथमहमेवास्या मरणकारणम्, न खल्ववगच्छामि ।

विदू । भोदि ! कहं विअ (७१) ।

चेटी । साकूतम् । जा सा पिअवअस्सेण दे कावि हिअअवल्लहा सिलाअले आलिहिआ, ताए पक्खपादिणा एदेण पडिवादअन्तस्सवि मित्तावसुणो णाहं पडिच्छिदेत्ति जादणिव्वेदाए इमाए एव्वं ववसिदं (७२) । (छ)

नायकः । सहर्षमात्मगतम् । कथमियमेवासौ विश्वावसोर्दुहिता मलयवती, अथवा रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः, हा ! कथं वञ्चितोऽस्मि अनया ।

विदू । भोदि ! जदि एव्वं ता अणवरद्धो दाणीं पिअवअस्सो । अहवा जइ मम ण पत्तिआअसि । तदा सअं ज्जेव्व सिलाअलं गदुअ पेक्खदु भोदी (७३) ।

---

(७०) नन्वेष एव ते प्रियवयस्यः ।

(७१) भवति ! कथमिव ।

(७२) या सा प्रियवयस्येन ते कापि हृदयवल्लभा शिलातले आलिखिता, तस्याः पक्षपातिना एतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतीष्टेति जातनिर्वेदया अनया एवं व्यवसितम् ।

(७३) भवति ! यद्येवं तदनपराद्ध इदानीं प्रियवयस्यः, अथवा यदि मम न प्रत्येषि, तदा स्वयमेव शिलातलं गत्वा प्रेक्षतां भवती ।

---

(छ) प्रतिपादयतः ददतः । प्रतीष्टा गृहीता । जातनिर्वेदया सञ्जातवैराग्यया । व्यवसितम् उद्युक्तम् ।

नायिका । सरूपं सवल्क्ष्य नायकं पश्यन्ती हस्तमाकर्षति ।

नायकः । सस्मितम् । न तावन्मुञ्चामि यावन्मम हृदय-वल्लभां शिलायामालेख्यगतां न पश्यसि ।

सर्वे परिक्रामन्ति ।

विदू । कदलीपत्रमपनीय । भोदि ! पेक्ख पेक्ख एदं से हिअअवल्लहं जणं (७४) ।

नायिका । निरूप्य व्यपवार्य्य सस्मितम् । चदुरिए ! अहं विअ आलिहिदा (७५) ।

चेटी । चित्राकृतिं निर्वर्ण्य । भट्टिदारिए ! किं भणासि अहं विअ आलिहिदेत्ति । ईदिसं सोसारिच्छं (च) । जेण ण जाणीअदि किं दाव इह ज्जेव्व सिलाअले भट्टिदारिआए पाडिबिम्बं सङ्कन्तं । उद तुमं आलिहिदेत्ति (७६) ।

नायिका । विहस्य । हञ्जे ! दुज्जणीकदम्हि इमिणा मं चित्तगदं दंसअन्तेण (७७) ।

विदू । णिव्वुत्तो दाणीं दे गन्धव्वो विवाहो (छ) । ता

(७४) भवति ! प्रेक्षस्व प्रेक्षस्व एतमस्य हृदयवल्लभं जनम् ।

(७५) चतुरिके ! अहमिवालिखिता ।

(७६) भर्त्तृदारिके ! किं भणसि ? अहमिवालिखितेति । ईदृशं सौसादृश्यम् । येन न ज्ञायते किं तावदिहैव शिलातले भर्त्तृदारिकायाः प्रतिबिम्बं संक्रान्तमुत त्वमालिखितेति ।

(७७) दुर्ज्जनीकृतास्मि अनेन मां चित्रगतां दर्शयता ।

(च) सौसादृश्यं सुसदृशत्वं सम्यक् सादृश्यमित्यर्थः ।

(छ) निर्वृत्तः सञ्जातः । गान्धर्वविवाहः परस्परानुरागजनित उद्वाहः गान्धर्वः समयान्मिथ इति याज्ञवल्क्यस्मरणात् ।

मुञ्च दाव से अग्ग हत्थं । एसा क्खु कावि तुरिदतुरिदा इह एव्व आअच्छदि (७८)।

नायकः । दृष्ट्वा ।

ततः प्रविशति चेटी ।

चेटी । सहर्षम् । भट्टिदारिए ! दिट्ठिआ वड्ढसि । पडिच्छिदा क्खु तुमं भट्टिणो जीमूदवाहणस्स गुरूहिं (७९)।

विदू । नृत्यन् । ही ही—भो सम्पुण्णा मणोरहा पिअवअस्सस्स । अहवा णहि णहि । भोदीए मलअवदीए । अधवा ण एदाणं । भोजनमभिनयन् । मम ज्जेव्व एक्कस्स बह्मणस्स (८०)।

चेटी । नायिकामुद्दिश्य । आणत्तम्हि जुअराजमित्तावसुणा जह अज्ज ज्जेव्व मलअवदीए विवाहो ता लहुं तं गेण्हिअ आअच्छत्ति । ता एहि गच्छम्ह (८१)।

---

(७८) निर्वृत्त इदानीं ते गान्धर्वो विवाहः । तन्मुञ्च तावदस्या अग्रहस्तम् । एषा खलु कापि त्वरितत्वरिता इहैवाग[illegible]ति ।

(७९) भर्तृदारिके ! दिष्ट्या वर्धसे प्रतीष्टा खलु त्वं भर्तुर्जीमूतवाहनस्य गुरुभिः ।

(८०) ही ही—भोः ! सम्पूर्णा मनोरथाः प्रियवयस्यस्य । अथवा नहि नहि भवत्या मलयवत्याः । अथवा न एतयोः । ममैव एकस्य ब्राह्मणस्य ।

(८१) आज्ञप्तास्मि युवराजमित्रावसुना यथा अद्यैव मलयवत्या विवाहः तल्लघु तां गृहीत्वा आगच्छेति । तदेहि गच्छावः ।

विदू। गदा क्खु तुमं दासीए धीए एदं गेण्हिअ। वअस्सेण किं इध एव्व पवत्थिदव्वं ?। (८२)

चेटी। हदास ! मा तुवर तुवर। तुम्हाणंपि णहुपणकं (ख) आगदं एव्व (८३)

नायिका। सानुरागं सलज्जञ्च नायकं पश्यन्ती सपरिवारा निष्क्रान्ता।

नेपथ्ये वैतालिकः पठति।

दृष्ट्वा पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यः सिन्दूरधूलीकृतदिवससमारम्भसन्ध्यातपश्रीः।
उद्गीतैरङ्गनानां चरणमणिरणन्नूपुरारावहृद्यै-
र्मध्याह्नस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः। ३१। (ग)

---

(८२) गता खलु त्वं दास्याः पुत्रि इमां गृहीत्वा। वयस्येन किमिहैव अवस्थातव्यम् ?।

(८३) हताश ! मा त्वरस्व त्वरस्व। युष्माकमपि स्नपनकम् आगतमेव।

---

(ख) स्नपनकं स्नानादिनिर्वाहकं द्रव्यमिति यावत्।

(ग) दृष्ट्वेति। इह अस्मिन् मलये पर्वते पिष्टातकस्य दृष्ट्वा मेरुतुल्यां सुमेरुसदृशीं द्युतिं दधानः धारयन् सद्यः साम्प्रतं सिन्दूरधूलीभिः कृता दिवससमारम्भे प्रातःकालेऽपीति यावत् सन्ध्यातपस्य सायंकालीनसूर्यकिरणस्य श्रीः येन तथाभूतः सिद्धलोकः अङ्गनानां नारीणाम् अरुणाः रक्ता मणयो येषु तादृशानां रणतां ध्वनतां नूपुराणाम् आरावेण झनत्कारेण हृद्यैः मनोहरैः उद्गीतैः उच्चैः गान्धारग्रामेण गीतैः षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिरिति सङ्गीतशास्त्रनियमात्। भवतः तव जीमूतवाहनस्येति भावः सिद्धये शुभपरिणय-

विदू। आकर्ण्य। भो वयस्य! दिष्टिया आगतं 'गृहपताकं (८४)।

नायकः। सहर्षम्। यद्येवं किमिदानीमिह स्थितेन। आगच्छ तातं नमस्कृत्य स्नानभूमिमेव गच्छावः।

इति निष्क्रान्ताः सर्वे।

द्वितीयोऽङ्कः।

---

# अथ तृतीयोऽङ्कः।

ततः प्रविशति मत्तो निर्मितविकृतवेशश्चषकहस्तो
विटः स्कन्धारोपितसुराभाण्डश्चेटश्च (क)।

विटः।

णिच्चं जो पिबइ सुरं जणस्स पिअसङ्गमञ्च जो कुणइ।
मह ते दो च्चिअ देवा बलदेवो कामदेवो अ ॥ ३२ ॥ (ख)

चेटः। भो वयस्य! दिष्ट्या आगतं मदनकम्।

सम्पादनाय उद्दाहृत्यानवका वैराग्यिकज्ञानसमय कथयति स्तूयते।
स्रग्धरावृत्तम्।

---

(क) मत्तः मद्यपानेनेति शेषः। चषकहस्तः पानपात्रपाणिः। चषकोऽस्त्री पानपात्रमित्यमरः। विटः सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्यामित्युक्तलक्षणः। चेटः शृङ्गारिनायकस्य अधमः सहायविशेषः। तदुक्तं दर्पणे, शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः। भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धा इति तथा शकारचेटाद्या अधमाः परिकीर्त्तिता इति च।

(ख) नित्यमिति। यः नित्यं सुरां पिबति, यश्च जनस्य प्रिय-

घूर्णन्। सफलं क्खु मे सेहरअस्स (ग) जीवअं।

वच्छत्थलम्हि दइआ णीलुप्पलवासिआ मुहे मइरा।
सीसम्मि अ सेहरओ णिच्चं विअ चेडिआ जस्स ॥२३॥ (घ)

प्रस्खलन्। अरे! को मं चालेदि?। सहर्षम्। अवस्सं णोमालिआ मं परिहसदि (१)।

चेटः। भट्टक! ण अ दाव सा अज्जवि इहागच्छदि (२)।

विटः। सरोषम्। पढमपहरे ज्जेव्व मलअवदीए विवाहमङ्गलं णिव्वुत्तं। ता कीस सा दाणीं पभादेवि णागच्छदि। विचिन्त्य सहर्षम्। अहवा विवाहमहोस्सवे

---

(१) नित्यं यः पिबति सुरां जनस्य प्रियसङ्गमञ्च यः करोति।
अथ तौ द्वावपि देवौ बलदेवः कामदेवश्च।
सफलं खलु मे शेखरकस्य जीवितम्।
वक्षःस्थले दयिता नीलोत्पलवासिता मुखे मदिरा।
शीर्षे च शेखरको नित्यमिव चेटिका यस्य॥
अरे! को मां चालयति? अवश्यं नवमालिका मां परिहसति।
(२) भर्त्तः! न च तावत् सा अद्यापि इहागच्छति।

---

सङ्गमं प्रियजनेन सङ्गमं करोति, तौ बलदेवः कामदेवश्चेति द्वौ देवौ। बलदेवस्य सुराप्रियत्वात् कामदेवस्य विलासित्वादिति भावः।

(ग) शेखरकस्य तदाख्यस्य।

(घ) वक्षःस्थले दयिता प्रिया, मुखे नीलोत्पलवासिता नीलोत्पलसुरभिः मदिरा, यस्य नित्यं चेटिकेव सङ्गिनी दासीव तिष्ठतीति शेषः स शेखरकः शीर्षे च शिरसि च सर्वथामित शेषः तिष्ठतीति शेषः सर्वलोकेभ्यः शेखरकोऽहं श्रेष्ठः सुखीवेति भावः।

सव्वो एव्व पिअपणइणीजणसणाहो सिद्धविज्जाहरलोओ कुसुमाअरुज्जाणे आपाणअसोक्खमणुभविस्सदित्ति (ङ) तक्केमि तहिं जेव्व णोमालिआ मं अवेक्खमाणा चिट्ठदि। ता तहिं जेव्व गमिस्सं। कीदिसो णोमालिआए विणा सेहरओ (३)।

प्रस्खलन्विक्रामति।

चेटः। एदु एदु भट्टके! इदं कुसुमाअरुज्जाणं। ता पविसदु भट्टके! (४)। उभौ प्रवेशं नाटयतः।

ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषकः।

विदू। सम्पुण्णा मणोरहा पिअवअस्सस्स। सुदं क्खु मए वि पिअवअस्सो कुसुमाअरुज्जाणं गमिस्सदित्ति। ता जाव तहिं एव्व गमिस्सं। परिक्रम्यावलोक्य च। इदं कुसुमाअरुज्जाणं। जाव पविसामि णं। प्रविश्य भ्रमरबाधां नाटयन्। अरे! कीस उण दुट्ठमहुअरा मं एव्व अभिभवन्ति। आत्मानमाघ्राय। भोदु जाणिदं। जं तं मलअ-

---

(३) प्रथमप्रहरे एव मदयन्त्या विवाहमङ्गलं निवृत्तम्। तत् कथं सा इदानीं प्रभातेऽपि नागच्छति। अथवा विवाहमहोत्सवे सर्व एव प्रियप्रणयिनीजनसनाथः सिद्धविद्याधरलोकः कुसुमाकरोद्याने आपानसौख्यमनुभविष्यतीति तर्कयामि तत्रैव नवमालिका माम् अवेक्षमाणा तिष्ठति। तत्तत्रैव गमिष्यामि। कीदृशो नवमालिकया विना शेखरकः।

(४) एतु एतु भर्त्ता। इदं कुसुमाकरोद्यानम्। तत् प्रविशतु भर्त्ता।

---

(ङ) आपानसौख्यं सुरापानजनितं सुखमित्यर्थः।

वदीबन्धुजणेण जामातुअस्स वअस्सोत्ति कदुअ ममङ्ग-माणं वसकेहिं विचिसिदोम्हि। सन्ताणकुसुमसेहरअं च मम सीसे पिणद्धं। सो क्खु एसो पआसरो अणत्थीभूदो। किं दाणिं एत्थं करइस्सं। अधवा एदेण ज्जेव्व मलअ-वदीसआसादो लद्धेणं रत्तंसुअजुअलेण इत्थिअवेसं विहिअ उत्तरीअकआवगुण्ठणो गमिस्सं। पेक्खामि दाव किं दासीए पुत्ता महुअरा करइस्सन्ति? (५)। तथा करोति।

विटः। निरूप्य सहर्षम्। अरे चेडा! अङ्गुल्या निर्दिश्य सहासम्। एसा क्खु णोमालिआ आअदा। मं पेक्खिअ चिरस्स आअदोत्ति कुविदा अवगुण्ठणं कदुअ अण्णदो गच्छदि। ता कण्ठे गेण्हिअ पसादेमि णं (६)। अवमो-चयन्नि कण्ठे गृहीत्वा मुखे ताम्बूलं दातुमिच्छति।

---

(५) सम्पूर्णा मनोरथाः प्रियवयस्यस्य। श्रुतं खलु मयापि प्रिय-वयस्यः कुसुमाकरोद्यानं गमिष्यतीति। तद्यावत्तत्रैव गमिष्यामि। इदं कुसुमाकरोद्यानम्। यावत् प्रविशाम्येतत्। अरे! कथं पुनर्दुष्टमधु-करा मामेव अभिभवन्ति। भवतु ज्ञातम्। यत्तन्मलयवतीबन्धुजनेन जामातुर्वयस्य इति कृत्वा सबहुमानं वर्णकैर्विचर्चितोऽस्मि। सन्तान-कुसुमशेखरकश्च मम शीर्षे पिनद्धम्। स खलु एषः अन्यादरः अनर्थी-भूतः। किमिदानीमत्र करिष्यामि। अथवा एतेनैव मलयवतीसका-शाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेषं विधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि। प्रेक्षे तावत् किं दास्याः पुत्रा मधुकराः करिष्यन्ति?।

(६) अरे चेट! एषा खलु नवमालिका आगता। मां प्रेक्ष्य कथं चिरस्यागत इति कुपिता अवगुण्ठनं कृत्वान्यतो गच्छति। तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम्।

विदू । मद्यगन्धं सूचयन् नासिकां गृहीत्वा पराङ्मुखः स्थित्वा । कहं एदाणं महुअराणं सआसादो परिब्भट्ठो दाणिं अण्णस्स दुट्ठमहुअरस्स मुहे पडिदम्हि (७) ।

विटः । कहं कोविण परम्मुही भूदा ? प्रणामं कुर्वन् विदूषकस्य चरणमात्मनः शिरसि कृत्वा । पसीद णोमालिए ! पसीद (८) ।

ततः प्रविशति चेटी ।

चेटी । आणत्तम्हि भट्टिदारिआए । हञ्जे णोमालिए ! कुसुमाअरुज्जाणं गदुअ उज्जाणपालिअं पल्लविअं भणाहि । अज्ज ! सविसेसं तमालवीहिअं सज्जीकरेहि । मलअवदीसहिदेण जामाउएण तत्थ गन्तव्वंति । आणत्ता मए पल्लविआ । ता जाव रअणीविरहवड्ढिदुक्कण्ठं पिअवअस्सं सेहरअं अण्णेसामि । दृष्ट्वा । एसो सेहरओ । सरोषम् । कहं अण्णं कम्पि इत्थिअं पसादेदि । ता इह ट्ठिदा एव्व जाणामि का एसेत्ति (९) ।

---

(७) कथमेतेषां मधुकराणां सकाशात् परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि ।

(८) कथं कोपेन पराङ्मुखीभूता ? प्रसीद नवमालिके ! प्रसीद ।

(९) आज्ञप्तास्मि भर्तृदारिकया हञ्जे नवमालिके ! कुसुमाकरोद्यानं गत्वा उद्यानपालिकां पल्लविकां भण । अद्य सविशेषं तमालवीथिकां सज्जीकुरु । मलयवतीसहितेन जामात्रा तत्र गन्तव्यमिति । आज्ञप्ता मया पल्लविका । तद्यावत् रजनीविरहवर्द्धितोत्कण्ठं प्रियवयस्यं शेखरकमन्विष्यामि । एष शेखरकः । कथमन्यां कामपि स्त्रियं प्रसादयति । तदिह स्थितैव जानामि कैषेति ।

चेटः। सहर्षम्।

हरिहरपिदामहाणं पि गव्विदो जो ण जाणइ णमिदुं।
सो सेहरओ चलणेसु तुज्झ णोमालिए! पडइ ॥६४॥ (१०)

विदू। दासीए पुत्ता! मत्तवालआ! कुदो एत्थ णोमालिआ (११)।

चेटी। निरूप्य सस्मितम्। कहं मं त्ति करिअ मदपरव्वसेण सेहरएण अज्जअत्तेओ पसादीअदि। ता जाव अलीअकोवं करिअ दुवेवि एदे परिहासिस्सं (१२)।

चेटः। चेटीं दृष्ट्वा शेखरकं हस्तेन चालयन्। भट्टका! मुञ्च एदं, ण भोदि एसा णोमालिआ, एसा उण रोसारत्तेहिं लोअणेहिं पेक्खन्ती आअदा (१३)।

चेटी। उपसृत्य। सेहरअ! का उण एसा पसादीअदि? (१४)।

विदू। अवगुण्ठनमपनीय। भोदि! कोवि बम्हणो अहं मन्दभागधेओ पउत्तो (१५)।

---

(१०) हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम्।
स शेखरकश्चरणेषु तव नवमल्लिके! पतितः॥

(११) दास्याः पुत्र! मत्तवालक! कुतोऽत्र नवमल्लिका।

(१२) कथं मामिति कृत्वा मदपरवशेन शेखरकेण आर्य्यात्रेयः प्रसाद्यते। तद्यावत् अलीकं कोपं कृत्वा द्वावप्येतौ परिहसिष्यामि।

(१३) भर्तः मुञ्चैतम्। न भवत्येषा नवमल्लिका। एषा पुनारोषारक्ताभ्यां लोचनाभ्यां प्रेक्षमाणा आगता।

(१४) शेखरक! का पुनरेषा प्रसाद्यते?

(१५) भवति! कोऽपि ब्राह्मणोऽहं मन्दभागधेयोपयुक्तः।

विटः। विदूषकं निरूप्य। अरे कविलमंकडुआ (च) तुमम्पि सेहरअं पदारेसि ? अरे चेड़ा ! गेण्ह एदं, जाव णोमालिअं पसादेमि (१६)।

चेटः। जं भट्टके आणवेदि (१७)।

विटः। विदूषकं मुक्त्वा चेट्याः पादयोः पतति। पसीद णोमालिए ! पसीद (१८)।

विदू। आत्मगतम्। एसो मे अवक्कमिदुं अवसरो (१९)। पलायितुमीहते।

चेटः। विदूषकं यज्ञोपवीते गृह्णाति यज्ञोपवीतं त्रुट्यति। कहिं कहिं कविलमंकडुआ पलाअसि (२०)। तदुत्तरीयेणैव मस्तके बद्ध्वा कर्षति।

विदू। भोदि णोमालिए ! पसीद मुञ्चेहि मं (२१)।

चेटी। विहस्य। जइ भूमीए सीसं णिवेसिअ पादेसु मे पड़सि (२२)।

---

(१६) अरे कपिलमर्कट ! त्वमपि शेखरकं प्रतारयसि ? अरे चेट ! गृहाणैतम्। यावत् नवमालिकां प्रसादयामि।

(१७) यत् भर्त्ता आज्ञापयति।

(१८) प्रसीद नवमालिके ! प्रसीद।

(१९) एष मेऽपक्रमितुमवसरः।

(२०) क्व क्व कपिलमर्कट ! पलायसे ?

(२१) भवति नवमालिके ! प्रसीद मोचय माम्।

(२२) यदि भूमौ शीर्षं निवेश्य पादेषु मे पतसि।

---

(च) कपिलमर्कट ! वर्णकविशेषरञ्जितगात्रत्वात् पिङ्गलवर्ण-वानराकृते !।

विदू। सरोषं सकम्पञ्च। भो! गन्धव्वराअमित्तो बम्हणो भविअ दासीए धीआए पादेसु पड़िस्सं (२३)।

चेटी। अङ्गुल्या तर्जयन्ती सस्मितम्। दाणिं पाड़इस्सं, सेहरअ! उट्ठेहि, पसण्णा दे अहं। कण्ठे गृह्णाति। एसो उण जामाउअस्स पिअवअस्सो तुए खलीकदो, एव्वञ्च सुणिअ कदापि भट्टा मित्तावसू तव कुप्पइ, ता आदरेण सम्माणेहि णं (२४)।

विटः। जं णोमालिआ आणवेदि। विदूषकं कण्ठे गृहीत्वा। अज्ज! तुमं मए सम्बन्धिओत्ति करिअ परिहसिदो।

घूर्णन्। किं सच्चकं जेव्व सेहरओ किं कदो परिहासो?। उत्तरीयं वर्त्तुलीकृत्य आसनं ददाति। इह उवविसदु सम्बन्धिओ (२५)।

विदू। स्वगतम्। दिट्ठिआ अवगदो विअ से मदावेगो (२६)। उपविशति।

---

(२३) भो गन्धर्वराजमित्रः ब्राह्मणो भूत्वा दास्याः पुत्र्याः पादेषु पतिष्यामि।

(२४) इदानीं पातयिष्यामि। शेखरक! उत्तिष्ठ। प्रसन्ना तेऽहम्। एष पुनर्जामातुः प्रियवयस्यस्त्वया खलीकृतः। एवञ्च श्रुत्वा कदापि भर्त्ता मित्रावसुस्तव कुप्यति। तदादरेण सम्मानयैनम्।

(२५) नवमालिका आज्ञापयति—आर्य्य! त्वं मया सम्बन्धीति कृत्वा परिहसितः किं सत्यमेव शेखरकः, किं कृतः परिहासः? इह उपविशतु सम्बन्धी।

(२६) दिष्ट्यापगत इवास्य मदावेगः।

विटः। णोमालिए! उवविस तुमम्पि एदस्स पासे, जेण दुवेवि तुम्हे समं एव्व सम्माणइस्सं (२७)।

चेटी। विहस्योपविशति।

विटः। चषकमादाय। अरे चेडा! पुरिदं क्खु एदं करेहि चसकं सुराए (२८)।

चेटः। नाट्येन चषकभरणं करोति।

विटः। स्वशिरःशेखरात् (क) पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां स्थित्वा नवमालिकाया उपनयति। णोमालिए! आस्सादेहि एदं एदस्स (२९)।

चेटी। सस्मितम्। जं सेहरओ भणादि (३०)। तथा कृत्वा विटस्यार्पयति।

विटः। विदूषकस्य चषकमर्पयति। एदं णोमालिआमुह-संसग्गसविसेसवासिअरसं सेहरअएण केणावि अणासादिदपुरुव्वं, ता पिबेहि एदं, किं ते अदोवि अवरं कआणं करइस्सं (३१)।

(२७) नवमालिके! उपविश त्वमपि एतस्य पार्श्वे, येन द्वावपि युवां सममेव सम्मानयिष्यामि।

(२८) अरे चेट! पूरितं खल्वेतं चषकं कुरु सुरया।

(२९) नवमालिके! आस्वाद्य देह्येतमेतस्य।

(३०) यत् शेखरको भणति।

(३१) इदं नवमालिकामुखसंसर्गसविशेषवासितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम्। तत् पिबैतत्। किं ते अतोऽप्यपरं कल्याणं करिष्यामि।

(क) स्वशिरःशेखरात् निजशिरोभूषणमाल्यात्।

विदू। सवैलक्ष्यस्मितं कृत्वा। सेहरअ! बम्हणो क्खु अहं (२२)।

चेटः। जदि तुमं बम्हणो, ता कहिं ते णव-सुत्तं (२३)। (ज)

विदू। तं क्खु मे इमिणा चेडेण कड्ढीअमाणं छिस्सं (२४)।

चेटी। विहस्य। जइ एव्वं, ता वेदक्खराइम्पि दाव काणिवि उदाहर (२५)।

विदू। भोदि! इमिणा सीधुगन्धेण कहिं वेदक्खराइं, अहवा किं मम भोदीए समं विवादेण, एसो दे बम्हणो पादेसु पडदि (२६)। इति पादयोः पतितुमिच्छति।

चेटी। हस्ताभ्यां निवार्य। मा क्खु एव्वं करेदु अज्जो, सेहरअ! ओसर, ओसर, बम्हणो क्खु एसो। विदूषकस्य पादयोः पतति। अज्ज! ण तुए कुविदव्वं, सम्बन्धिकाणुरूवो क्खु एसो मए परिहासो कदो (२७)।

(२२) शेखरक! ब्राह्मणः खल्वहम्।

(२३) यदि त्वं ब्राह्मणः। तत् क्व ते नवसूत्रम्?

(२४) तत् खल्वनेन चेटेन कथ्यमानं छिन्नम्।

(२५) यद्येवम्, तद् वेदाक्षराण्यपि कान्यपि उदाहर।

(२६) भवति! अनेन सीधुगन्धेन क्व वेदाक्षराणि, अथवा किं मम भवत्या सह विवादेन, एष ते ब्राह्मणः पादेषु पतति।

(२७) मा खल्वेवं करोत्वार्य्यः, शेखरक! अपसर अपसर, ब्राह्मणः खल्वेषः, आर्य्य! न त्वया कोपितव्यम्, सम्बन्धिकानुरूपः खल्वेष मया परिहासः कृतः।

(ज) नवसूत्रं नवीनं यज्ञसूत्रमित्यर्थः।

विदू० । अहम्मि एवं पसादेमि । पादयोर्निपत्य । मरि-सेदु मरिसेदु भोदी, जं मए मदपरव्वसेण अवरद्धं, जेण अहं णोमालिआए सह आवाणअं गमिस्सं (३८) ।

विदू० । मरिसिदं मए, गच्छ तुम्हे, अहम्मि पिअवअस्सं पेक्खामि (३९) ।

निष्क्रान्तो विटश्चेट्या सह चेटश्च ।

विदू० । अदिक्कन्तो अम्हाणं अकालमिच्चू, ता जाव अहम्मि मत्तबालअसङ्कदूसिदो इह दिग्घिआए ण्हा-इस्सं । तथा करोति । नेपथ्याभिमुखमवलोक्य । एसो पिअवअ-स्सोवि रुक्मिणीं विअ हरो मलअवदीं अवलम्बिअ इदो-एव्व आअच्छदि, ता जाव पासपरिवत्ती होमि (४०) ।

ततः प्रविशति यथानिर्दिष्टनेपथ्यो नायको मलयवती विभवतश्च परिवारः ।

नायकः । मलयवतीमवलोकयन् सहर्षम् ।

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।

---

(३८) अहमप्येनां प्रसादयामि, मर्षयतु मर्षयतु भवती, यन्मया मदपरवशेनापराद्धम्, येनाहं नवमालिकया सह आपानं गमिष्यामि ।

(३९) मर्षितं मया । गच्छतं युवाम् । अहमपि प्रियवयस्यं प्रेक्षे ।

(४०) अतिक्रान्तोऽस्माकमकालमृत्युः । तद्यावदहमपि मत्तबालकसङ्कदूषित इह दीर्घिकायां स्नास्यामि । एष प्रियवयस्योऽपि रुक्मिणीमिव हरिर्मलयवतीमवलम्ब्य इत एवागच्छति । तद्यावत् पार्श्वपरिवर्ती भवामि ।

---

(क) दृष्टेति । अद्य नवोढा नवपरिणीता प्रिया वामतया

निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते

याता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥२५॥ (झ)

मलयवतीं पश्यन्। प्रिये मलयवति!

हुङ्कारं ददता मया प्रतिवचो यन्मौनमासेवितं

यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैः स्नापिता।

ध्यातं यत् सुचिरमनन्यमनसा नक्तन्दिनानि प्रिये!

तस्यैतत् तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥२६॥ (ञ)

---

प्रतिकूलतयैव मे मम सुतराम् अत्यर्थं प्रीत्यै जाता अतिप्रीतिकरी भूतेत्यर्थः तथाहि इयं अवलोकिता सती अधोदृष्टिं ददाति, आभाषिता आलपिता सती न आलापं कुरुते, शय्यायां परिवृत्य तिष्ठति, बलात् बलमाश्रित्येत्यर्थः आलिङ्गिता सती वेपते कम्पते, सखीषु वासभवनात् निर्यान्तीषु निर्गच्छन्तीषु सतीषु निर्गन्तुमेव ईहते चेष्टते इत्थं प्रतिकूलवर्तिनी अपि मम प्रीतिं वितनोतीति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम्।

(ञ) हुङ्कारमिति। हे प्रिये! मया हुङ्कारं प्रतिवचः ददता यत् मौनं वाक्संयम इत्यर्थः आसेवितम् अनुष्ठितं दावानलस्येव दीप्तिर्येषाम् अत्युष्णत्वादिति भावः तैः चन्द्रातपैः चन्द्रकिरणैः यत् इयं तनुः स्नापिता अभिषेचिता, तथा अनन्यमनसा अन्येभ्यो विषयेभ्यो निवर्त्तितचित्तेन मया सुचिरं नक्तन्दिनानि व्याप्येति शेषः यत् ध्यातं चिन्तितं भवदालम्बनं नियतध्यानं ध्यानञ्च तपसोऽङ्गं मया च त्वत्प्राप्त्याशया तद्विचिन्तनदा केनापि सहालापवर्जनात् नितरामावश्यके व्यापारे हुङ्कारेणैव प्रतिवचोदानात् चन्द्रकिरणानामग्नितुल्यतया तत्सेवनात् सततचिन्तनाच्च तपोऽनुष्ठितमिति भावः अधुना ते तव इदं मुखं पश्यामीति यत् एतत् तस्य पूर्वोक्तस्य तपसः फलम्। शार्दूलविक्रीडितं वृत्तम्।

नायिका। अपवार्य। हञ्जे चदुरिए! ण केवलं दंसणीओ, पिअम्मि भणिदुं जाणादि ज्जेव्व (४१)।

चेटी। विहस्य। अदिपक्खवादिणि सच्चकं ज्जेव्व एदं,(ट) किं एत्थ पिअवअणं (४२)।

नायकः। चतुरिके! आदेशय मार्गं कुसुमाकरोद्यानस्य।

चेटी। एदु एदु भट्टा (४३)।

नायकः। परिक्रम्य नायिकां निर्दिश्य। स्वैरं स्वैरमागच्छतु भवती।

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपरः
श्राम्यत्यूरुयुगं नितम्बभरतः काञ्च्यानया किं पुनः।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरौ
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम्॥३७॥
(ठ)

---

(४१) हञ्जे! चतुरिके! न केवलं दर्शनीयः प्रियमपि भणितुं जानात्येव।

(४२) अतिपक्षपातिनि सत्यकमेवैतत्। किमत्र प्रियवचनम्।

(४३) एतु एतु भर्ता।

---

(ट) अतिपक्षपातिनि अत्यनुरागिणि। सत्यकमेतत् एतत् अनेन यदुक्तं त्वदर्थं तपः कृतमिति तत् सत्यमेवेत्यर्थः।

(ठ) खेदायेति। हे प्रिये! स्तनभारस्तनयोर्विस्तार एव ते तव मध्यस्य मध्यभागस्य खेदाय श्रमाय भवतीति शेषः अपरः हारः तदुपरीति शेषः किमु, अधिकखेदाय भवतीति किं वक्तव्य इति

चेटी । एदं क्खु तं कुसुमाअरुज्जाणं, ता पविसदु भट्टा (४४) ।

सर्वे प्रविशन्ति ।

नायकः । विलोक्य । अहो नु कुसुमाकरोद्यानस्य (ड) परा श्रीः । इह हि—

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपं कुट्टिमान्तं
तारं धारागृहाणां ध्वनिमनुतनुते ताण्डवं नीलकण्ठः ।
यन्त्रोन्मुक्तश्च वेगाद् गलति विटपिनां पूरयन्नालवालान्
आपातोत्पीडहेलाहृतकुसुमरजःपिञ्जरोऽयं जलौघः ॥३०॥
(ढ)

---

(४४) एतत् खलु तत् कुसुमाकरोद्यानम् । तत्प्रविशतु भर्त्ता ।

---

भावः ; ऊरुयुगं नितम्बभरतः नितम्बातिभारात् श्राम्यति क्लाम्यति, अनया काञ्च्या रशनया पुनः किम् ? तदुपरि रशनातिखेदकरीति भावः । ऊरुयुगलं वोढुं पादयुगस्य चरणद्वयस्य न शक्तिः न सामर्थ्यं नूपुरौ कुतः ऊरुभारधारणाक्षमयोः पादयोः पुनर्नूपुरभारणमतिखेदकरमिति भावः त्वं स्वाङ्गैः निजावयवैरेव विभूषितासि अलङ्कृतासि, अपरम् अलङ्कारं क्लेशाय किं कथं वहसि ? शार्दूलविक्रीडितं वृत्तम् ।

(ड) परा महती ।

(ढ) निष्यन्द इति । चन्दनानां निष्यन्दः रसः कुट्टिमान्तं लतामण्डपं शिशिरयति शीतलयति, नीलकण्ठो मयूरः धारागृहाणां जलयन्त्रगृहाणां तारं महान्तं ध्वनिम् अनुसृत्य इत्यर्थः मेघध्वनिमनुमायेति भावः ताण्डवं नृत्यं ताण्डवं नटनं नृत्यमित्यमरः । तनुते विस्तारयति । यन्त्रात् धारायन्त्रात् उन्मुक्तः निःसृतः अयं जलौघः जलराशिः वेगात् आपातेन निपतनेन यः उत्पीडः आघात इत्यर्थः तेन हेलया अनायासेन हृतानां पातितानां कुसुमानां

अपिच—

अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।
पिबन्तः पर्य्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीव मधुपाः ॥ ३८ ॥ (ण)

विदू । उपसृत्य । जेदु जेदु भवं । सोत्थि भोदोए (४५) ।

नायकः । वयस्य ! चिराद्दृष्टोऽसि ।

विदू । भो वअस्स ! लहुं एव्व आअदोम्हि । किं उण विवाहमहूसवमिलिदसिद्धविज्जाहराणं आपाणदंसणकोदूहलेण परिब्भमन्तो एत्तिअं वेलं चिट्ठिदोम्हि । ता तुमम्पि दाव पेक्ख (४६) ।

---

(४५) जयतु जयतु भवान् । स्वस्ति भवत्यै ।

(४६) भो वयस्य ! लघ्वेवागतोऽस्मि । किं पुनर्विवाहमहोत्सवमिलितसिद्धविद्याधराणामापानदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां स्थितोऽस्मि । तत् त्वमपि तावत् प्रेक्षस्व ।

---

रजोभिः परागैः पिञ्जरः रञ्जित इत्यर्थः सन् विटपिनां तरूणाम् आलवालान् तलस्थितजलाधारवर्त्तुलाकारवेष्टनानि [illegible] गलति पतति । स्रग्धरावृत्तम् ।

(ण) अमी इति । अमी मधुपाः मधुकराः गीतारम्भैः मुखरिताः शब्दिता लतामण्डपान्येव भुवः यैः तथोक्ताः, पुष्पाणां परागैः रजोभिः प्रकटः पटवासानां तदाख्य पटवासानां व्यतिकरः सम्पर्कः येषां तथाविधाः पटवासरञ्जिता इत्यर्थः सहचरीभिः मधुकरीभिः सह पर्य्याप्तं प्रभूतं मधुरसं पिबन्तः सन्तः समन्तात् आपानोत्सवम् अनुभवन्तीव । उत्प्रेक्षालङ्कारः । शिखरिणीवृत्तं रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ।

नायकः । एवं यथाह भवान् । समन्तादवलोकयन् ।
वयस्य ! पश्य पश्य—

स्निग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः ।
सार्द्धं सिद्धजनैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥४०॥ (त)

तदेहि वयमपि तां तमालवीथिं गच्छामः । परिक्रामति ।

विदू । एसा क्खु तमालवीहिआ, एदं सञ्चरन्तो दाव परिखेदिदा विअ भोदी दीसइ,ता इह एव्व फलिहमणिसिलाअले उपविसिअ वीसमम्ह (४७) ।

नायकः । वयस्य ! सम्यगुपलक्षितम्—

एतन्मुखं प्रियायाः शशिनं जित्वा कपोलयोः कान्त्या ।
तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम् ॥ ४१ ॥ (थ)

---

(४७) एषा खलु तमालवीथिका । एतां सञ्चरन्ती तावत् परिखेदितेव भवती दृश्यते । तदिहैव स्फटिकमणिशिलातले उपविश्य विश्राम्यामः ।

---

(त) स्निग्धाङ्गा इति । अमी विद्याधरा हरिचन्दनेन स्निग्धं विलिप्तम् अङ्गं येषां तथोक्ताः सन्तानकानां देवतरुविशेषाणां स्रजो माल्यानि दधतः धारयन्तः तथा माणिक्याभरणानां प्रभाव्यतिकरैः प्रभापुञ्जैः चित्रीकृतानि रञ्जितानि अच्छानि विशदानि अंशुकानि सूक्ष्मवसनानि येषां तथाविधाः सन्तः चन्दनतरुच्छायासु सिद्धजनैः सार्द्धं मिश्रीभूय मिलित्वा दयितापीतावशिष्टानि मधूनि पिबन्ति । शार्दूलविक्रीडितं वृत्तम् ।

(थ) एतदिति । एतत् प्रियाया मुखं कपोलयोः कान्त्या प्रभया

नायिकां हस्ते गृहीत्वा । प्रिये ! इहोपविशामः ।

नायिका । जं अज्जउत्तो आणवेदि (४८) ।

सर्वे उपविशन्ति ।

नायकः । नायिकाया मुखमुन्नमय्य पश्यन् । प्रिये ! वृथैव त्वमस्माभिः कुसुमाकरोद्यानकुतूहलिभिः खेदिता । कुतः ।

एतत्ते भ्रूलतोद्भासि पाटलाधरपल्लवम् ।

मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम् ॥४२॥ (द)

चेटी । सस्मितं विदूषकं निर्दिश्य । सुदं तुए भट्टिदारिअं कहं वसोदि । अज्ज उण अहं तुमं वण्णेमि (४९) ।

विदू । सहर्षम् । भोदि ! जीविदोम्हि । ता करेदु भोदी पसादं । जेण एसो (ध) मं पुणोवि ण भणादि । सहा तुमं ईदिसो । तादिसो कविलमंकडापारोत्ति (५०) ।

(४८) यदार्य्य पुत्र आज्ञापयति ।

(४९) श्रुतं त्वया भर्तृदारिकां कथं वर्णयति, अद्य पुनरहं त्वां वर्णयामि ।

(५०) भवति जीवितोऽस्मि तत् करोतु भवती प्रसादम् । येनैष

विशदयति गच्छः शशिनं चन्द्रं जित्वा निर्जित्य क[illegible] तामेन सूर्य्या-तपेन अनुरक्तं यत् कमलं केतुम् ईहते चेष्टते ध्रुवं मन्ये, मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादय इति ध्रुवं पदस्य उत्प्रेक्षाव्यञ्जकत्वात् उत्प्रेक्षालङ्कारः । आर्य्यावृत्तम् ।

(द) एतदिति । भ्रुवौ एव लते ताभ्याम् उद्भासि शोभमानं पाटलः रक्तः अधर एव पल्लवः यत्र तादृशं यत् नन्दयतीति नन्दनं तदाख्यम् उद्यानं देवोद्याननिकर्षः अतः अस्मात् तव मुखरूपादुद्यानात् अन्यत् उद्यानं केवलं वनम् ।

(ध) एषः विट इति भावः ।

चेटी। अज्ज ! तुमं मए विवाहजागरणे णिद्दाअमाण-णिमीलिअअच्छो सोहणो दिट्ठो। ता तह एव्व चिट्ठ जेण वण्णेमि (५१)।

विदू। तथा करोति।

चेटी। स्वगतम्। जाव एसो णिमीलिअअच्छो चिट्ठदि, ताव णीलरसाणुआरिणा तमालपल्लवरसेण मुहं काली-करइस्सं (५२)। उत्थाय तमालपल्लवं निष्पीड्य विदूषकस्य मुखं कालीकरोति।

नायकौ नायिका च विदूषकं पश्यतः।

नायकः। वयस्य ! धन्यः खल्वसि, योऽस्मासु तिष्ठत्सु भवानेवं वर्ण्यते।

नायिका। नायकस्य मुखं दृष्ट्वा स्मितं करोति।

नायकः। नायिकामुखं दृष्ट्वा।

स्मितपुष्पोद्गमोऽयन्ते दृश्यतेऽधरपल्लवे।
फलं त्वन्यत्र मुग्धाक्षि ! चक्षुषोर्मम पश्यतः ॥४३॥ (न)

---

मा पुनरपि न भणति। यथा त्वमीदृशः। तादृशः कपिलमर्कटाकार इति।

(५१) आर्य्य ! त्वं मया विवाहजागरणे निद्रायमाणनिर्मीलिताक्षः शोभनो दृष्टः। तत्तथैव तिष्ठ येन वर्णयामि।

(५२) यावदेष निर्मीलिताक्षस्तिष्ठति। तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखं कालीकरिष्यामि।

---

(न) स्मितेति। हे मुग्धाक्षि ! सुलोचने ! ते तव अधर एव पल्लवः नवकिसलयः तत्र स्मितमेव पुष्पं तस्य उद्गमः उदयः, अन्यत्र तु पश्यतो मम चक्षुषोः फलं दृश्यते, यत्र पुष्पोद्गमस्तत्रैव फलोत्पत्तिरिति

विदू। भोदि ! किं तए किदं ? (५३)।

चेटी। णं वसिप्रोसि (५४)।

विदू। हस्तेन मुखं प्रमृज्य दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य।

आः दासीए धीए ! राप्रउलं क्खु एदं। किं तव करइस्सं। नायकं निर्दिश्य। भो तुम्हाणं पुरदो अहं दासीए धीआए खलीकदो। ता किं मम इह ट्ठिदेण। अण्णदो गमिस्सं (५५)।

निष्क्रामति।

चेटी। कुविदो मे अज्जअत्तेओ, जाव णं गदुअ पसादइस्सं (५६)।

नायिका। हञ्जे चदुरिए ! किं मं एआइणिं उज्झिअ गच्छसि ? (५७)।

चेटी। नायकं निर्दिश्य सस्मितम्। एव्वं एआइणी चिरं होहि (५८)।

इति निष्क्रान्ता।

---

(५३) भवति ! किं त्वया कृतम् ?

(५४) ननु वर्णितोऽसि।

(५५) आः दास्याः पुत्रि ! राजकुलं खल्वेतत्। किं तव करिष्यामि। भो युवयोः पुरतोऽहं दास्याः पुत्र्या खलीकृतम्। तत् किं ममेह स्थितेन। अन्यतो गमिष्यामि।

(५६) कुपितो मे आर्य्योत्रेयः, यावदेनं गत्वा प्रसादयिष्यामि।

(५७) हञ्जे चतुरिके ! किं मामेकाकिनीं उज्झित्वा गच्छसि ?।

(५८) एवमेकाकिनी चिरं भव।

---

प्रसिद्धिः, इदन्तु विपरीतं तवाधरे स्मितपुष्पं मम चक्षुषि तु तद्दर्शनजनितानन्दरूपं फलमिति भावः।

नायकः। नायिकाया मुखं पश्यन्।

दिनकरकरैर्मृष्टं बिभ्रत् द्युतिं परिपाटलां
दशनकिरणैः संसर्पद्भिः स्फुटीकृतकेसरम्।
यदि मुखमिदं मुग्धे! सत्यं समं कमलेन ते
मधु मधुलिहः किन्नैतस्मिन् पिबन् प्रविभाव्यते ॥४४॥ (प)

नायिका। विहस्य मुखमन्यतो नयति।

नायकः। तदेव पठति।

प्रविश्य पटाक्षेपेण (फ)।

चेटी। उपसृत्य। एसो क्खु अज्जमित्तावसू कज्जेण केणावि कुमारअं पेक्खिदुमिच्छदि (५८)।

नायकः। प्रिये! गच्छ त्वमात्मनो गृहम्, अहमपि मित्रावसुं दृष्ट्वा त्वरितमागत एव।

नायिका। चेट्या सह निष्क्रान्ता।

---

(५८) एष खल्वार्य्यमित्रावसुः कार्येण केनापि कुमारं प्रेक्षितुमिच्छति।

---

(प) दिनकरकरैरिति। हे मुग्धे! सुन्दरि! यदि इदं ते तव मुखं दिनकरस्य सूर्य्यस्य करैः किरणैः मृष्टं स्पृष्टम् अतएव परिपाटलां परितो रक्तां द्युतिं कान्तिं बिभ्रत् दधत् तथा संसर्पद्भिः प्रसरद्भिः दशनानां दन्तानां किरणैः स्फुटीकृताः व्यक्तीकृताः केसराः किञ्जल्काः यस्य तथोक्तम् अतएव सत्यं कमलेन समं दृश्यते इति शेषः तदा मधुलिहः भ्रमरः एतस्मिन् तव मुखकमले मधु पिबन् किं कथं न प्रविभाव्यते न लक्ष्यते? मधुकरस्यात्र मधुपानं युक्तमिति भावः। हरिणीवृत्तम्।

(फ) पटाक्षेपेण पटस्य जवनिकायाः आक्षेपेण अपसारणेन।

ततः प्रविशति मित्रावसुः ।

मित्रा । अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः ॥४५॥ (ब)
अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि,
कुमार ! मित्रावसुः प्रणमति ।

नायकः । मित्रावसुं दृष्ट्वा । मित्रावसो ! इत आस्यताम् ।

मित्रा । निरूप्य उपविशति ।

नायकः । निरूप्य । मित्रावसो ! संरब्ध इव लक्ष्यसे ?
(भ)

मित्रा । कः खलु मतङ्गहतके संरम्भः ? (म) ।

नायकः । किं कृतं मतङ्गेन ? ।

मित्रा । स्वनाशाय किल युष्मदीयं राज्यमाक्रान्तम् ।

नायकः । सहर्षमात्मगतम् । अपि नाम सत्यमेतत् स्यात् ? ।

मित्रा । अतस्तदुच्छित्तये आज्ञां दातुमर्हति कुमारः । किं बहुना—

---

(ब) अनिहत्येति । अहं जीमूतवाहनस्य तं सपत्नं शत्रुम् अनिहत्य अविनाश्य निर्लज्जः सन् रिपुणा तव राज्यं हृतमिति कथमिव कथयिष्यामि ? एतत्कथने मम लज्जा भवतीति भावः ।

(भ) संरब्ध इव सम्भ्रान्त इव संक्रुद्ध इव वा संरम्भः सम्भ्रमे कोपे इत्यमरः ।

(म) कः खलु मतङ्गहतके संरम्भ इति मतङ्गहतकं हन्तुं संरम्भः कः ? विना संरम्भेणैव तं हनिष्यामीति भावः ।

संसर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्व्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धश्चोद्वृत्तशत्रुक्षणभयविनमद्राजकं ते स्वराज्यम् ॥४६॥ (य)

अथवा, किं बलौघैः —

एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
आरान्निपत्य हरिणेव मतङ्गजेन्द्रम्
आजौ मतङ्गहतकं हतमेव विद्धि ॥ ४७ ॥ (र)

---

(य) संसर्पद्भिरिति । एते सिद्धाः तव वचनं प्राप्य समन्तात् संसर्पद्भिः सञ्चरद्भिः कृतं सकलेषु वियत्सु अन्तरीक्षेषु मध्ये यानं सञ्चारो यैः तथाभूतैः विमानैः देवयानैः प्रावृषीव वर्षास्विवेत्यर्थः स्थगिताः तिरोहिताः रवेः सूर्यस्य रुचो यत्र तादृशस्य वासरस्य दिवसस्य श्यामतां कुर्व्वाणाः सन्तः सद्यः झटिति इतः अस्मात् प्रदेशात् युद्धाय याताः, उद्वृत्तेभ्यः उपस्थितेभ्यः शत्रुभ्यः यत् क्षणभयम् अल्पकालकं भयं तेन विनमत् आमीदत् राजकं राजसमूहो यस्मिन् तथाभूतं ते तव स्वाराज्यं सिद्धञ्च शत्रुहस्तात् उद्धृतञ्च अविलम्बेन भवितेति भावः । स्रग्धरा वृत्तम् ।

(र) एकाकिनेति । मया एकाकिनैव निःसहायेनैव रभसेन वेगेन आकृष्टः यः निस्त्रिंशः असिः तस्य दीधितयः प्रभाः सटा इव जटा इव तासां भरेण अतिरेकेण भासुरः समुज्ज्वलः तेन सता हरिणा सिंहेन मतङ्गजेन्द्रं हस्तीन्द्रमिव आजौ युद्धे आरात् समीपे निपत्य मतङ्गहतकं हतमेव नाशितमेव विद्धि अवगच्छ । उपमालङ्कारः । वसन्ततिलकं वृत्तम् । सेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ।

नायकः। (आत्मगतम् कर्णौ पिधाय।) अहह! दारुणमभिहितम्, अथवा एवं तावत्। (प्रकाशम्।) मित्रावसो! कियदेतत्, बहुतरमपि बाहुशालिनि (ल) त्वयि सम्भाव्यते। किन्तु —

स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया।
राज्यस्य कृते स कथं प्राणिवधक्रौर्य्यमनुमन्ये ॥४८॥ (व)

अपि च। क्लेशान् विहाय मम शत्रुबुद्धिरेव नान्यत्र। यदि त्वमस्मत्प्रियं कर्त्तुमीहसे, तदनुकम्प्यतामसौ क्लेशदासीकृतो राज्यस्य कृते राज्यस्य तपस्वी (श)।

मित्रा। (सामर्षम्।) कथं नानुकम्पनीय (ष) ईदृशोऽस्माकमुपकारी कृपणस्य।

नायकः। (स्वगतम्।) अनिवार्य्यसंरम्भः (स) कोपाविष्टचेता न तावदयं शक्यते निवर्त्तयितुम्, तदेवं तावत्। (प्रकाशम्) मित्रावसो! उत्तिष्ठ, अभ्यन्तरमेव प्रविशावः,

---

(ल) कियदेतत् स्वल्पमात्रमेतत्। बाहुशालिनि भुजवीर्य्यशालिनि।

(व) स्वशरीरमिति। यः खलु अयाचितः अप्रार्थितोऽपि कृपया परार्थे स्वशरीरमपि दद्यात् राज्यस्य कृते स कथं प्राणिवधक्रौर्य्यं जीवहिंसानिष्ठुरतां कर्त्तुमिति शेषः अनुमन्ये ? कथमनुमोदनं करोमीत्यर्थः। आर्य्यावृत्तम्।

(श) क्लेशानिति। क्लेश एव मम शत्रुरिति भावः। ईहसे चेष्टसे कर्त्तुमित्यर्थः, क्लेशदासीकृतः क्लेशपरतन्त्रः राज्यस्य कृते राज्यलाभार्थम्। तपस्वी वराकः।

(ष) नानुकम्पनीय इति काकुपठनोक्तिः।

(स) अनिवार्य्य संरम्भः दुर्निवारक्रोधः।

तत्रैव तावत् त्वां बोधयिष्यामि, सम्प्रति परिणतमहः, तथाहि।

निद्रामुद्रावबन्धव्यतिकरमनिशं पद्मकोशादपास्यन्
आशापूरैककर्मप्रवणनिजकरप्राणिताशेषविश्वः।
दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छन्
एकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रसादः ॥४८
(ह)

इति निष्क्रान्ताः सर्वे।

इति तृतीयोऽङ्कः।

---

(ह) निद्रेति। पद्मकोशात् कमलमुकुलात् अनिशं सततं निद्रा अविकाशः स एव मुद्रावबन्धः सङ्कोचावस्थानं तस्य व्यतिकरं सम्बन्धम् अपास्यन् निराकुर्वन् तथा आशानां दिशां पूरः स्वतेजसा पूरणमेव एकं मुख्यं कर्म आशा लोकानां प्रार्थना तस्याः पूरः पूरणं सफलीकरणं तदेव एकं कर्म इति ध्वनिः तस्मिन् प्रवणैः निरतैः निजकरैः स्वकिरणैः स्वहस्तैरिति ध्वनिः प्राणितं जीवितम् अशेषं विश्वं जगत् येन तथाभूतः किञ्च अस्तं गच्छन्नपि प्रसक्ताभिः प्रस्तुताभिः स्तुतिभिः मुखराणि मुखानि येषां तादृशैः सिद्धैः देवयोनिविशेषैः दृष्टः निरीक्षितः एषः एकः अद्वितीयः विवस्वान् सूर्यः श्लाघ्यः प्रशस्यः, यस्य सूर्यस्य प्रसादः उदयः प्रसन्नता च परेषां हितकरणाय मङ्गलानुष्ठानाय एव। यतो जगद्धितार्थमेव उदेति अतः श्लाघनीय इति निष्कर्षः। स्रग्धरावृत्तम्।

# अथ चतुर्थोऽङ्कः।

ततः प्रविशति कञ्चुकी (क) गृहीतरक्तवस्त्रयुगलः प्रतीहारश्च।

कञ्चुकी। अन्तःपुराणां विहितव्यवस्थः

पदे पदे संस्खलितानि पश्यन्।

जरातुरः सम्प्रति दण्डनीत्या

सर्वां नृपस्यानुकरोमि वृत्तिम् ॥५०॥ (ख)

प्रती। आर्य्य वसुभद्र! क्व नु खलु भवान् प्रस्थितः?।

कञ्चुकी। आदिष्टोऽस्मि देव्या मित्रावसुजनन्या, कञ्चुकिन्! दशरात्रं त्वया यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानि, दुहिता च श्वशुरकुले वर्त्तते। जीमूतवाहनोऽपि युवराजेन सह समुद्रवेलां द्रष्टुमद्य गत इति

---

(क) कञ्चुकी अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणः पुरुषः।

अन्तःपुराणामिति। जरातुरः जरया वार्द्धकेन आतुरः आर्त्तः अहं अन्तःपुराणां विहिता कृता व्यवस्था येन तथाभूतः पदे पदे प्रतिपदविक्षेपं प्रतिविषयञ्च संस्खलितानि पदस्खलनानि अनवधान-विजृम्भितानि च पश्यन् सम्प्रति दण्डनीत्या यष्टिग्रहणेन दण्डविधा-यकनीतिशास्त्रेण च नृपस्य राज्ञः सर्वां वृत्तिम् आचारम् अनु-करोमि। उपजातिर्वृत्तम्। स्यादिन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति च तल्लक्षणात्। श्लेषानुप्राणित उपमा-लङ्कारः।

श्रूयते, तन्न जाने, किं राजपुत्र्याः सकाशं गच्छामि, अथवा जामातुरिति ।

प्रती । आर्य्य ! वरं राजपुत्र्याः सकाशं गन्तव्यम्, तत्र हि कदाचिदस्यां वेलायां जामाता स्वयमेवागतो भविष्यति ।

कञ्चुकी । साधूक्तम् अथ भवान् पुनः क्व प्रस्थितः ? ।

प्रती । आदिष्टोऽस्मि महाराजविश्वावसुना, यथा भो सुनन्द ! गच्छ मित्रावसुं ब्रूहि, अस्मिन् दीपप्रतिपदुत्सवे (ग) मलयवत्या जामातुश्च यत् किञ्चित् प्रदीयते, तदुत्सवानुरूपं किञ्चिदागत्य चिन्त्यतामिति ।

ततः प्रविशति जीमूतवाहनो मित्रावसुश्च ।

नायकः ।

शय्या शाद्वलमासनं शुचि शिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥५१॥
(घ)

---

(ग) दीपप्रतिपदुत्सवे दीपप्रतिपन्नाम कश्चित् उत्सवः दीपदानरूपानन्दजनकव्यापारविशेषः स च कस्यामपि प्रतिपदि तिथौ क्रियते अतस्तदुत्सवो दीपप्रतिपदिति कथ्यते । तत्र ।

(घ) शय्येति । शाद्वलं नवतृणं शय्या शयनीयं शुचि शिला पवित्रं पाषाणम् आसनं द्रुमाणां वृक्षाणाम् अधः तलं सद्म आवासः, पीयते इति पानं शीतं शीतलं निर्झरवारि कन्दाः मूलविशेषाः अशनं भोज्यं वस्तु इत्यर्थः मृगाः सहायाः सहचराः इति इत्थम् अप्रार्थितः अयाचितः लभ्यः सर्वविभवः समस्तसम्पद् यस्मिन् तादृशे वने अयम्

मित्रा। ऊर्द्ध्वमवलोक्य। कुमार! त्वर्य्यतां त्वर्य्यताम्, समयोऽयं चलितुमम्बुराशेः।

नायकः। आकर्ण्य। सम्यगुपलक्षितम्।

उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिताः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति॥१२॥ (ङ)

मित्रा। नन्वियमागतैव, पश्य।

कवलितलवङ्गपल्लवकरिमकरोद्गारिसुरभिणा पयसा।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति॥१३॥ (च)

---

एकः दोषः, यत् दुष्प्रापाः दुर्लभाः अर्थिनो यत्र तादृशे अर्थरहिते इत्यर्थः अस्मिन् परार्थघटनायां परकार्य्यकरणे वन्ध्यैः विफलैः परकार्य्यमकुर्वद्भिरित्यर्थः वृथा श्लाघ्यते विफलं कालो नीयते इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ङ) उन्मज्जदिति। उन्मज्जताम् उत्पततां जलकुञ्जरेन्द्राणां जलहस्तिनां रभसेन वेगेन यः आस्फालः जलोत्पाटनं तस्य अनुबन्धेन सातत्येन उद्धतः उत्कटतां नीतः, तथा सर्वाः पर्वतानां याः कन्दराः गुहाः तासाम् उदरभुवः अभ्यन्तरभागान् प्रतिध्वानिताः प्रतिध्वनियुताः प्रतिध्वानिनीरिति पाठे स एवार्थः। कुर्वन् अतएव श्रुतिपथोन्माथी कर्णविवरक्षोभी अयम् उच्चैः महान् ध्वनिः यथा उच्चरति उद्गच्छति, तथा प्रायः मन्ये प्रेङ्खद्भिः चलद्भिः असंख्यैः शङ्खैः धवला इयं वेला समुद्रजलराशिः आगच्छति उत्पतति। शार्दूलविक्रीडितं वृत्तम्।

(च) कवलितेति। एषा समुद्रवेला सागरतटी वेलाब्धितीरनीर-योरित्यमरः। कवलिताः भक्षिताः लवङ्गपल्लवा यैः तादृशान् करिणो

नायकः। मित्रावसो! पश्य पश्य, शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः (छ)।

मित्रा। नैवामी मलयसानवः, नागानामस्थिसंघाताः (ज) खल्वमी।

नायकः। सोद्वेगम्। कष्टम् किं निमित्तममी संघातमृत्यवो जाताः (झ)।

मित्रा। कुमार! नैवामी संघातमृत्यवः, श्रूयतां यथैतत्, इह किल खपक्षपवनापास्तसमस्तसागरतलपूरं रसातलादुद्धृत्य प्रतिदिनमेकैकं नागमाहारयति वैनतेयः (ञ)।

---

जलहस्तिनो मकरा जलजन्तुविशेषाश्च करिसमा मकरा वा तान् उद्गिरति उद्वमतीति तथोक्तम् अतएव सुरभि सुगन्धं तेन पयसा जलेनोपलक्षिता तथा रत्नानां समुद्रगर्भस्थितानां द्युतिभिः कान्तिभिः रञ्जिता सती भाति राजते। आर्य्यावृत्तम्।

(छ) शरत्समयपाण्डुभिः शरदागमशुभ्रैः पयोदपटलैः मेघनिचयैः प्रावृता आच्छादिता अतएव प्रालेयाचलस्य हिमशैलस्य शिखरश्रियं शृङ्गकान्तिम्। मलयसानवः मलयपर्वततटाः।

(ज) नागानां पन्नगानाम्।

(झ) अमी नागाः सङ्घातमृत्यवः सङ्घातेन संहत्या मृत्युर्येषां तथोक्ताः। युगपत् बहवो मृता इत्यर्थः।

(ञ) खपक्षेति। खस्य पक्षयोः पवनेन अपास्तः चालित ताडितः समस्तः सागरतलस्य पूरः प्रवाहो यस्मिन् तद् यथा तथा रसातलात् पातालात्। आहारयति भक्षयति वैनतेयः विनतात्मजो गरुड़ इत्यर्थः।

नायकः। सोद्वेगम्। कष्टमतिदुष्करं करोति, ततस्ततः।

मित्रा। ततः सकलनागविनाशाशङ्किना वासुकिना गरुत्मान् अभिहितः।

नायकः। सादरम्। किं मां प्रथमं भक्षयेति ?।

मित्रा। नहि नहि।

नायकः। किमन्यत् ?।

मित्रा। इदमुक्तम्—त्वदभिपातसन्त्रासात् सहस्रशः स्रवन्ति भुजङ्गमानां गर्भाः, शिशवश्च पञ्चत्वमुपयान्ति, एवञ्च सन्ततिविच्छेदोऽस्माकम्, तव चैव स्वार्थहानिः (ट) तत् यदर्थमभिपतति भवान् नागलोकं तानहं नागमेकैकमनुदिनं प्रेषयामि।

नायकः। कथं रक्षिता नागराजेन (ठ) पन्नगाः ?।

जिह्वासहस्रद्वितयस्य मध्ये
नैकापि सा तस्य किमस्ति जिह्वा।
एकाहिरक्षार्थमहिद्विषेऽद्य
दत्तो मयात्मेति यया ब्रवीति ॥१४॥ (ड)

---

(ट) त्वदभिपातसन्त्रासात् तव अभिपाते आपतने ततः यः सन्त्रासः भयं तस्मात्। एवञ्च एवं सति सन्ततिविच्छेदः वंशलोपः। स्वार्थहानिः निजाहारस्याभावः।

(ठ) नागराजेन वासुकिना।

(ड) जिह्वेति। तस्य नागराजस्य जिह्वासहस्रद्वितयस्य सहस्र-द्वितयस्मात् जिह्वासहस्रं द्विजिह्वत्वाच्च तद्द्वितयमिति बोध्यं मध्ये सा एकापि जिह्वा किं नास्ति ? यया जिह्वया एकस्य अहेः नागस्य रक्षार्थम् अद्य अहिद्विषे नागशत्रवे गरुत्मते मया आत्मा दत्त इति ब्रवीति स इति शेषः। इन्द्रवज्रावृत्तम्।

निमा । प्रतिपन्नं तत् (ट) पक्षिराजेन —

इत्येष भोगिपतिना विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः ।
यास्यन्ति यान्ति च गताश्च दिने विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ५५ ॥ (ण)

नायकः । आश्चर्यम् ! ! !

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ५६ ॥ (त)

अहो ! कष्टपर्यवसानेयं (थ) विपत्तिर्नागानाम् । आत्मगतम् । अपि शक्नुयामहं स्वशरीरसमर्पणेन एकस्य नागस्य प्राणपरिरक्षां कर्त्तुम् ।

ततः प्रविशति प्रतीहारः ।

प्रती । आरूढोऽस्मि गिरिशिखरम्, यावन्मित्रावसुम-

---

(ट) प्रतिपन्नं स्वीकृतं तत् नागराजवचनमित्यर्थः ।

(ण) इतीति । एष पतगाधिराजः इति इत्थं भोगिपतिना नागराजेन कृता व्यवस्था यस्य तथाविधः यान् अहिपतीन् नागेन्द्रान् भक्षयति, तेषां नागेन्द्राणाम् अमी तुहिनशैलरुचः हिमाचलप्रभाः अस्थिकूटा अस्थिनिचयाः दिने प्रतिदिनमित्यर्थः विवृद्धिं विशेषेण वृद्धिं यास्यन्ति यान्ति गताश्च । वसन्ततिलकं वृत्तम् ।

(त) सर्वेति । मूढा निर्बुद्धयोऽज्ञा इत्यर्थः सर्वेषाम् अशुचीनाम् अमेध्यानां निधानस्य आश्रयस्य कृतघ्नस्य विनाशिनः नश्वरस्य शरीरकस्य क्षुद्रशरीरस्य अपि कृते निमित्तं पापानि कुर्वते आचरन्ति ।

(थ) अहो इति । खेदसूचकमव्ययम् । कष्टं पर्यवसानम् अन्तो यस्यास्तादृशी ।

ल्विष्यामि। परिक्रम्य। अयं मित्रावसुर्भ्रातुः समीपे तिष्ठति। उपसृत्य। विजयेतां कुमारौ।

मित्रा। सुनन्द! किं निमित्तमिहागमनम्?।

प्रती। कर्णे कथयति।

मित्रा। कुमार! तातो मामाह्वयति।

नायकः। गम्यताम्।

मित्रा। कुमारेणापि बहुप्रत्यवाये (द) ऽस्मिन् प्रदेशे न चिरं स्थातव्यम्। इति निष्क्रान्तः।

नायकः। यावदहमप्यस्माद्गिरिशिखरादवतीर्य समुद्रतटमवलोकयामि। परिक्रामति।

नेपथ्ये। हा पुत्तअ सङ्खचूड! कहं वावादिज्जमाणो अज्ज किल तुमं मए पेक्खिदव्वो? (१)।

नायकः। श्रुत्वा कर्णं दत्त्वा। अये! योषित इवार्त्तप्रलापः, केयं, कुतो वास्या भयमिति स्फुटीकरिष्ये। परिक्रामति।

ततः प्रविशति रुदत्या वृद्धया अनुगम्यमानः शङ्खचूडो गोपायितवस्त्रयुगलश्च (ध) किङ्करः।

वृद्धा। सास्रम्। हा पुत्तअ सङ्खचूड! कहं वावादिज्जमाणो अज्ज किल तुमं मए पेक्खिदव्वो। चिबुकं गृहीत्वा।

(१) हा पुत्रक शङ्खचूड! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः?।

(द) बहुप्रत्यवाये बहुविघ्नकरे बहुपापजनके वा।

(ध) गोपायितेति। गोपायितं रक्षितं स्वीकृतमित्यर्थः वस्त्रयुगलं येन तथोक्तः।

इमिणा मुहचन्देण विरहिदं दाणीं अन्धआरीभविस्सदि पाआलं (२)।

शङ्ख। अम्ब! किमिति वैक्लव्येन? (न) सुतरां नः पीडयसि।

वृद्धा। निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती। हा पुत्त! कहं दे अदिट्ठसूरकिरणं सुउमारसरीरं णिग्घिणो (प) गरुड़ो आहारइस्सदि (३)। कण्ठे गृहीत्वा रोदिति।

शङ्ख। अम्ब! अलं परिदेवितेन, पश्य।

क्रोड़ीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः? ॥१७॥ (फ)

गन्तुमिच्छति।

वृद्धा। पुत्तअ! चिट्ठ मुहुत्तअं, जाव दे वअणं पेक्खामि (४)।

---

(२) हा पुत्रक शङ्खचूड़! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः? अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम्।

(३) हा पुत्र! कथं ते अदृष्टसूर्यकिरणं सुकुमारशरीरं निर्घृणो गरुड़ आहारयिष्यति?।

(४) पुत्र! तिष्ठ मुहूर्तम्, यावत् ते वदनं प्रेक्षे।

---

(न) वैक्लव्येन कातरभावेन।

(प) निर्घृणः निर्दयः।

(फ) क्रोड़ीकरोतीति। अनित्यता विनश्वरत्वं धात्रीव उपमातेव यदा जातं जीवं प्रथमं क्रोड़ीकरोति, क्रोड़ं नयतीत्यर्थः पश्चात् जननी क्रोड़ीकरोतीत्यर्थः तदा शोकस्य क्रमः नियमः हेतुरिति यावत् कः? न कोऽपि शोकहेतुरित्यर्थः।

किङ्करः। एहि कुमाल सङ्खचूड ! किं दे एदाए भणन्तीए, पुत्तसिणेहमोहिदा क्खु एसा, ण आणादि लाअकज्जं ? (५)।

शङ्ख। अयमागच्छामि।

किङ्करः। आत्मगतम् अग्रतोऽवलोक्य। आणीदो क्खु एसो मए वज्झसिलासमीवे, ता वज्झचिण्हं दाइस्सं (६)।

नायकः। इयमसौ योषित्। शङ्खचूडं दृष्ट्वा। नूनमनेनास्याः सुतेन भवितव्यम्, तत् किमाक्रन्दति ?। समन्तादवलोक्य। न खल्वस्या भयकारणं किञ्चित् पश्यामि, कुतोऽस्या भयमिति, यावदुपसर्पामि, प्रसक्त एवायमेतेषामालापः, कदाचिदत एवास्याभिव्यक्ति(ब)र्भविष्यति, तद्विटपान्तरितस्तावच्छृणोमि।

किङ्करः। सास्रं कृताञ्जलिः। कुमाल संखचूड एसो सामिणो आदेसोत्ति कलिअ ईदिसं णिट्ठुरं मन्तीअदि (७)।

शङ्ख। भद्र ! कथय (भ)।

---

(५) एहि कुमार शङ्खचूड ! किं ते एतया भणन्त्या, पुत्रस्नेहमोहिता खल्वेषा, न जानाति राजकार्य्यम् ?

(६) आनीतः खल्वेष मया वध्यशिलासमीपे, तद् वध्यचिह्नं दास्यामि।

(७) कुमार शङ्खचूड ! एष स्वामिन आदेश इति कृत्वा ईदृशं निष्ठुरं मन्त्र्यते।

---

(ब) प्रसक्त एव चलित एव। अभिव्यक्तिः प्रकाशः।

(भ) मन्त्र्यते कथ्यते।

किङ्करः । णाअराआ वासुई आणवेदि (८) ।

शङ्ख । शिरस्यञ्जलिं बद्ध्वा सादरम् । किमाज्ञापयति देवः ? ।

किङ्करः । एदं लत्तंसुअजुअलं परिहिअ आलुह वज्झसिलं, जेण लत्तंसुअं उवलक्खिअ गलुडो आहालइस्सदित्ति (९) ।

नायकः । श्रुत्वा । कथमसौ वासुकिना परित्यक्तः ? ।

किङ्करः । कुमाल ! गेण्ह एदं वसणजुअलं । (१०) इत्यर्पयति ।

शङ्ख । सादरम् । उपनय । गृहीत्वा । शिरसि स्वाम्यादेशः ।

वृद्धा । पुत्रस्य हस्ते वाससी दृष्ट्वा, सोरस्ताडम् । हा वच्छ ! एदं क्खु वज्जपाडसण्णिभं सम्भावीअदि (११) । मोहं गता ।

किङ्करः । आसण्णा गलुडस्स आअमणवेला, ता लहुं गच्छामि (१२) । इति निष्क्रान्तः ।

शङ्ख । अम्ब ! समाश्वसिहि ।

वृद्धा । समाश्वस्य सास्रम् । हा पुत्तअ ! हा मणोरहसअलद्ध ! कहिं पुणो तुमं पेक्खिस्सं (१३) । कण्ठे गृह्णाति ।

---

(८) नागराजो वासुकिः आज्ञापयति ।

(९) इदं रक्तांशुकयुगलं परिधाय आरोह वध्यशिलाम् । येन रक्तांशुकमुपलक्ष्य गरुड आहारयिष्यतीति ।

(१०) कुमार ! गृहाणैतत् वसनयुगलम् ।

(११) हा वत्स ! इदं खलु वज्रपातसन्निभं सम्भाव्यते ।

(१२) आसन्ना गरुडस्यागमनवेला, तल्लघु गच्छामि ।

(१३) हा पुत्रक ! हा मनोरथशतलब्ध ! क्व पुनस्त्वां प्रेक्षिष्ये ?

नायकः। अहो! नैर्घृण्यं (म)। गरुडस्य अपि च—

मूढाया मुहुरश्रुसन्ततिमुचः कृत्वा प्रलापान् बहून्
कस्त्राता तव पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम्।
अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामग्रतः
चञ्चुपुटेन खगाधिपस्य हृदयं वज्रेण मन्ये कृतम्॥५८॥ (य)

शङ्खः। आत्मनोऽश्रूणि निवारयन्। अम्ब! किमतिवैक्लव्येन? ननु समाश्वसिहि।

वृद्धा। सास्रम्। कहं समस्ससिस्सं, किं एक्कपुत्तकोत्ति करुण साणुकम्पेण णाअराएण पेसिदोसि, हा कहं अविच्छिण्णे जीअलोए मम पुत्तओ सुमरिदो (र) सव्वधा अहं म्हि मन्दभग्गा (१४) रुदति।

(१४) कथं समाश्वसिष्यामि? किमेकपुत्रक इति कृत्वा सानुकम्पेन नागराजेन प्रेषितोऽसि? हा कथमविच्छिन्ने जीवलोके मम पुत्रकः स्मृतः। सर्वथाहमस्मि मन्दभाग्या।

(म) नैर्घृण्यं निर्दयत्वम्।

(य) मूढाया इति। मूढाया मोहं गतायाः अश्रुसन्ततिमुचः मातुः मुहुः पुनः पुनः बहून् प्रलापान् कृत्वा अश्रुसन्ततिमुचः अश्रुधारां त्यजन्त्या इत्यर्थः, हे पुत्रक! कः ते तव त्राता रक्षिता इति कृपणं दीनं यथा तथा दिक्षु दृशं नयनं क्षिपन्त्या दत्तवत्या मातुः, अङ्के क्रोडे अवस्थितम् इमं शिशुं घृणां दयां त्यक्त्वा चञ्चुपुटेन अग्रतः भक्षयतः खगाधिपस्य गरुडस्य हृदयं वज्रेण कृतं निर्मितं मन्ये तर्कयामि। शार्दूलविक्रीडितं वृत्तम्।

(र) एकपुत्रक इति। एक एव पुत्रकः अस्या इति कृत्वा विविच्य सानुकम्पेन दयावता नागराजेन कथं प्रेषितोऽसि, तव प्रेषणं

नायकः । सकरुणम् ।

आर्त्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः ।

त्राये नैनं यदि ततः कः शरीरेण मे गुणः ? ॥५८॥ (ल)

तद् यावदुपसर्पामि ।

शङ्ख । अम्ब ! संस्तम्भयात्मानम् (व) ।

वृद्धा । हा पुत्तअ ! जदा णाअलोअपरिरक्खएण वासुइणा परिच्चत्तोसि, तदा को दे अवरो परित्ताणं करिस्सदि ? (१५) ।

नायकः । उपसृत्य । नन्वहमहम् ।

वृद्धा । नायकं दृष्ट्वा ससम्भ्रममुत्तरीयेण पुत्रकमाच्छाद्य नायकमुपसृत्य जानुभ्यां स्थित्वा । विणदाणन्दण ! वावादेहि मं, अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा (१६) ।

नायकः । साश्रम् । अहो ! पुत्रवात्सल्यम् ! ! !

---

(१५) हा पुत्रक ! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि, तदा कस्ते अपरः परित्राणं करिष्यति ?

(१६) विनतानन्दन ! व्यापादय माम्, अहं ते नागराजेनाहारनिमित्तं परिकल्पिता ।

---

तादृशस्य दयावतो न युक्तमिति भावः । अविच्छिन्ने विच्छेदरहिते जीवलोके संसारे । स्वतः नागराजेनेति शेषः आक्षेपोक्तिरियम् ।

(ल) आर्त्तमिति । यदि आर्त्तं कातरं कण्ठगतप्राणं स्वबन्धुभिः परित्यक्तम् एनं न त्राये न रक्षामि, ततस्तदा मे शरीरेण को गुणः किं प्रयोजनम् ? न कोऽपीत्यर्थः ।

(व) संस्तम्भय स्थिरीकुरु ।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।
अकरुणहृदयः करुणां करिष्यति भुजगशत्रुरपि ॥१०॥ (ग)

नायकः । अम्ब ! अलं त्रासेन, न नागशत्रुः, पश्य—

महाहिमस्तिष्कविभेदमुक्त-
रक्तच्छटाचर्चितचण्डचञ्चुः ।
क्वासौ गरुत्मान् क्व च नाम सौम्य-
स्वभावरूपाकृतिरेष साधुः ॥११॥ (घ)

वृद्धा । अहं क्खु तुम्ह मरणभीआ सव्वं एव्व लोअं गरुडमअं पेक्खामि (१७) ।

नायकः । अम्ब ! किं पुनःपुनरभिहितेन ? ननु कर्मणैव सम्पादयामि (ङ) ।

वृद्धा । शिरस्यञ्जलिं बद्ध्वा । पुत्तअ ! चिरं जीअ (१८) ।

---

(१७) अहं खलु तव मरणभीता सर्वमेव लोकं गरुडमयं प्रेक्षे ।

(१८) पुत्रक ! चिरं जीव ।

---

(ग) अस्या इति । अस्याः नागमातुः पुत्रस्नेहेन इदं विक्लवत्वं कातरत्वं विलोक्य अकरुणहृदयः निर्दयात्मा भुजङ्गानां शत्रुः गरुडोऽपि करुणां करिष्यति, मन्ये सम्भावयामि । आर्या वृत्तम् ।

(घ) महेति । महताम् अहीनां नागानां मस्तिष्कात् शिरःस्थितघृताकारवस्तुनः विभेदात् मुक्ताभिर्निर्गलिताभिः रक्तच्छटाभिः रुधिरधाराभिः चर्चिते रञ्जिते रक्तीकृते इत्यर्थः चण्डे भीषणे चञ्चुपी यस्य तादृशः असौ गरुत्मान् क्व ? सौम्याः स्वभावा रूपाणि आकृतयश्च यस्य तादृशः एषः साधुश्च क्व ? नामेति सम्भावनायाम् अस्य गरुडत्वशङ्कापि न सम्भाव्यते इत्यर्थः । उपजातिर्वृत्तम् ।

(ङ) कर्मणैव कार्येणैव । सम्पादयामि करोमि परित्राणमिति शेषः ।

नायकः। ममैतदम्बार्पय वध्यचिह्नं

प्रावृत्य यावद्विनतात्मजाय।

पुत्रस्य ते जीवितरक्षणाय

स्वदेहमाहारयितुं ददामि॥ १२॥ (क)

वृद्धा। कर्णौ पिधाय। पडिहदं क्खु एदं, तुमम्पि सङ्खचूड़णिव्विसेसो पुत्तो, अहवा सङ्खचूड़ादोवि अहिअदरो. जो एव्वं बन्धुजणपरिच्चत्तं वि पुत्तअं मे सरीरप्पदाणेण रक्खिदुमिच्छसि (१८)।

शङ्ख। अहो!! जगद्विपरीतमस्य महासत्त्वस्य (ख) चेतः, कुतः।

विश्वामित्रः श्वमांसं श्वपच इव पुराभक्षयद् यन्निमित्तं

नाड़ीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन।

---

(१८) प्रतिहतं खल्वेतत्, त्वमपि शङ्खचूड़निर्विशेषः पुत्रः, अथवा शङ्खचूड़ादप्यधिकतरः, य एवं बन्धुजनपरित्यक्तमपि पुत्रकं मे शरीरप्रदानेन रक्षितुमिच्छसि।

---

(क) ममेति। हे अम्ब! मातः! एतत् वध्यचिह्नं रक्तवस्त्रयुगलमिति भावः मम अर्पय देहि, यावत् तेनैतत्वस्त्रेण प्रावृत्य आच्छाद्य आत्मानमिति शेषः ते तव पुत्रस्य जीवितरक्षणाय विनतात्मजाय गरुत्मते स्वदेहम् आहारयितुं भक्षयितुं ददामि। उपजातिर्वृत्तम्।

(ख) महासत्त्वस्य महाप्राणिनः महोत्साहस्य वा।

(ग) विश्वामित्र इति। विश्वामित्रः पुरा पूर्वस्मिन् काले श्वपच इव चाण्डाल इव यन्निमित्तं येषां प्राणानां रक्षार्थमित्यर्थः श्वमांसं कुक्कुरजघनमांसमित्यर्थः अभक्षयत्, तदुक्तं मनुना, क्षुधार्त्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम्। चाण्डालहस्तादादाय

पुत्रोऽयं कश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थे ददाति ॥६३॥
(क)

नायकमुद्दिश्य। भो महासत्त्व! त्वया दर्शितैव आत्मप्रदानव्यवसायनिर्व्याजा मयि कृपालुता, तदलमनेन निर्बन्धेन (ख) पश्य।

जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ? ॥ ६४ ॥ (ग)

तत् किमनेन निर्बन्धेन मुच्यतामयमध्यवसायः (घ)।

नायकः। शङ्खचूड! न मे चिराल्लब्धावसरस्य पश्य

---

धर्माधर्मविचक्षण इति। गौतमेन मुनिना कृता तस्य गौतमस्य उपकृतिरुपकारो येन तथोक्तो नाडीजङ्घः तदाख्यो मुनिविशेषः यत्कृते येषां प्राणानां कृते रक्षणार्थमित्यर्थः निजमपि निहतः। अयं कश्यपस्य पुत्रः तार्क्ष्यः गरुत्मान् यदर्थं येषां प्राणानां रक्षणार्थं प्रतिदिनम् उरगान् नागान् अत्ति भक्षयति, य एष साधुः परार्थे परप्राणरक्षणार्थं कृपया तान् प्राणान् तृणमिव ददाति। स्रग्धरावृत्तम्।

(ख) आत्मेति। आत्मनः स्वदेहस्य प्रदाने यो व्यवसायः उद्योगः तेन निर्व्याजा अकपटा। निर्बन्धेन आग्रहेण।

(ग) जायन्ते इति। मद्विधाः मादृशाः क्षुद्रजन्तवः नीचप्राणिनः जायन्ते च उत्पद्यन्ते च म्रियन्ते पञ्चत्वमायान्ति च, परार्थे पररक्षणार्थं बद्धकक्षाणां संयतकटीनां सन्नद्धानामित्यर्थः त्वादृशां त्वत्सदृशानाम् उद्भवः कुतः ? न कुत्रापि त्वादृशा उद्भवन्तीत्यर्थः।

(घ) अध्यवसायः उद्योगः।

परार्थसम्पादनमनोरथस्यान्तरायं कर्तुमर्हसि, तदलं विकल्पेन (ङ) दीयतामेतद् वध्यचिह्नम्।

शङ्ख। भो महासत्त्व! किमनेन वृथायासेन? न खलु शङ्खधवलं शङ्खपालकुलं शङ्खचूडो मलिनीकरिष्यति, यदि ते वयमनुकम्पनीयाः, तदा इयमस्माद्विपत्तिविक्लवा मा यथा जीवितं जह्यात् (च) तथाभ्युपायश्चिन्त्यताम्।

नायकः। किमत्र चिन्त्यते?।

म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥५६॥ (छ)

अयमभ्युपायः (ज) तदर्पय त्वरितं वध्यचिह्नम्, यावदनेनात्मानं प्रच्छाद्य वध्यशिलामारोहामि, त्वमपि जननीं पुरस्कृत्य अस्माद्देशान्निवर्तस्व, कदाचिदम्बा आलोक्य घातस्थानं संनिकृष्टं स्त्रीस्वभावकातरत्वेन जीवितं जह्यात्.

---

(ङ) चिराय दीर्घकालात् परमिति शेषः अस्यावसरस्य प्राप्तकालस्य। परार्थेति परार्थस्य परकार्यस्य सम्पादनायां निर्वाहणे यः मनोरथः अभिलाषः तस्य। अन्तरायं विघ्नम्। विकल्पेन अन्यथा कल्पनेन।

(च) शङ्खपालेति। शङ्खपालस्य शङ्खचूडजनकस्य कुलम्। जह्यात् त्यजेत्।

(छ) म्रियते इति। या त्वयि म्रियमाणे म्रियते, त्वयि जीवति जीवति, तां तव मातरमित्यर्थः यदि जीवन्तीमिच्छसि, तदा मम असुभिः प्राणैः आत्मानं रक्ष।

(ज) अयमभ्युपायः तव मातुः प्राणरक्षणे इति शेषः।

भृत्य । उत्थाय । जवाद्दूरमपि अदूरे मन्यमानो दक्षि-णगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि (त)। उभौ निष्क्रान्तौ ।

नायकः । दृष्ट्वा सहर्षमात्मगतम् । दिष्ट्या सिद्धमभिवा-ञ्छितम् अनेन अतर्कितोपनतेन (थ) रक्तांशुकयुगलेन ।

प्रविश्य ।

कञ्चुकी । इदं वासोयुगं देव्या मित्रावसुजनन्या कुमा-राय प्रेषितम्, तदेतत् परिधत्तां कुमारः ।

नायकः । सादरम् । उपनय ।

कञ्चुकी । उपनयति ।

नायकः । गृहीत्वा आत्मगतम् । सफलीभूतो मे मलय-वत्याः पाणिग्रहः । प्रकाशम् । कञ्चुकिन् ! गम्यतां, मद्-वचनादभिवादनीया देवी ।

कञ्चुकी । यदाज्ञापयति कुमारः । इति निष्क्रान्तः ।

नायकः । वासोयुगमिदं रक्तं प्राप्ते काले समागतम् ।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः ॥ १८ ॥ (द)

दिशोऽवलोक्य । यथायं चलितमलयाचलशिलास-

---

(त) जवात् वेगात् । दक्षिणगोकर्णं तदाख्यं शिवलिङ्गविशेषः । स्वाम्यादेशं स्वामिनः प्रभोर्नागराजस्य आदेशम् ।

(थ) अतर्कितोपनतेन असम्भावितोपस्थितेन ।

(द) वासोयुगमिति । प्राप्ते काले उपयुक्ते समये समागतम् इदं रक्तं वासोयुगं वस्त्रयुगलं परार्थे देहम् उज्झतः त्यजतः मे मम महतीं प्रीतिम् आधत्ते जनयति ।

ञ्चयः प्रचण्डो नभस्वान् (ध) तथा तर्कयामि आसन्नीभूतः खलु पक्षिराज इति। तथाहि,

तुल्याः संवर्ताभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽस्य क्षिपति भुव इव प्लावनायाम्बुराशेः।
कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रैः
देहोद्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥७०॥
(न)

तद् यावदसौ नागच्छेत् शङ्खचूडः, तावत् त्वरिततरमिमां वध्यशिलामारोहामि। तथा कृत्वा उपविश्य स्पर्शं नाटयति।

अहो स्पर्शोऽस्याः।

न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा।
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथाश्लिष्टा ॥७१॥ (प)

---

(ध) चलितेति। चलितः स्थानात् भ्रष्टः मलयाचलस्य शिखा-सञ्चयः यस्मात् तथाभूतः प्रचण्डः प्रबलः नभस्वान् वायुः।

(न) तुल्या इति। संवर्ताभ्रैः संवर्तकालमेघैः तुल्याः समाः पक्षतीनां पक्षमूलानां पङ्क्तयः श्रेणयः गगनं पिदधति आच्छादयन्ति। वेगानिलः भुवः प्लावनाय इव अम्बुराशेः तीरे अम्भः क्षिपति। कल्पान्तशङ्कां प्रलय-सन्देहं कुर्वन् अतएव सपदि सहसा दिग्द्विपेन्द्रैः दिग्गजैः सभयं वीक्षितः दृष्टः तथा द्वादशादित्यदीप्तिः द्वादशसूर्यसदृशभः अयं गरुत्मान्, देहस्य उद्योतैः प्रभाभिः मुहुः पुनः पुनः दश आशाः दिशः कपिशयति कपिशाः पिङ्गलाः करोति। स्रग्धरावृत्तम्।

(प) नेति। मलयचन्दनरसेन आर्द्रा लिप्ताङ्गी मलयवती आश्लिष्टा सती तथा मन्ये न सुखयति सुखीकरोति, अभिवाञ्छितस्य अर्थस्य परप्राणरक्षणरूपस्य सिद्ध्यै आश्लिष्टा आलिङ्गिता इयं वध्य-शिला यथा सुखयतीति शेषः।

अथवा किं मलयवता?—

शयितेन मातुरङ्के विश्रब्धं शैशवे न तत् प्राप्तम्।
यत् सुखं मयास्यां वध्यशिलायां त्वदुत्सङ्गे ॥७२॥ (क)

तदयमागतो गरुत्मान्, यावदात्मानमाच्छादयामि। तथा करोति।

ततः प्रविशति गरुडः।

गरुडः।

दृष्ट्वा बिम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन।
एष प्रान्तावसक्तज्वलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिप्राशलम्पटः जवेन ॥७३॥ (ख)

नायकः। सपरितोषम्।

---

(क) शयितेनेति। शैशवे बाल्ये मातुः अङ्के क्रोडे विश्रब्धं निःशङ्कं शयितेन मया तत् सुखं न प्राप्तम्, अस्यां वध्यशिलायां त्वदङ्के क्रोडे शयितेन यत् सुखं प्राप्तमिति शेषः।

(ख) दृष्ट्वेति। हिमांशोश्चन्द्रस्य बिम्बं दृष्ट्वा भयेन चकित इति शेषः कृतं वलयं मण्डलाकारेण अवस्थानं यया तादृशीं कुण्डलीभूतां शेषस्य अनन्तनागस्य मूर्तिं संस्मरन्, स्यन्दनाश्वानां रथाश्वानां त्रासेन भय इति शेषः विचलिते कम्पिते चञ्चलीभूते इति यावत् पूष्णि सूर्ये अग्रजेन ज्येष्ठेन अरुणेन सानन्दं आयातं मे भ्रातेति साह्लादं दृष्टः, तथा प्रान्तैः अतएव अवसक्तैर्लग्नैर्जलधरपटलैः आयतीभूताः दीर्घीभूताः विस्तारं गताः दृश्यन्ते पक्षा यस्य तथोक्तः एषः अहम् अहीनां नागानां प्राशे भक्षणे लम्पटः लोलुपः सन् जवेन वेलामहीध्रं समुद्रतटस्थितं मलयपर्वतं प्राप्तः। स्रग्धरा-वृत्तम्।

संरक्षता पन्नगमद्य पुण्यं
मयार्जितं यत् स्वशरीरदानात्।
भवे भवे तेन ममैव भूयात्
परार्थहेतोः खलु देहलाभः॥७४॥ (भ)

गरुडः। नायकं निर्वर्ण्य।

अस्मिन् वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्यानिलचञ्चुचञ्चुतरया चञ्च्वाधुना वक्षसि।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा॥७५॥ (म)

इत्यभिपत्य नायकं गृह्णाति, नेपथ्ये पुष्पाणि पतन्ति, दुन्दुभयश्च ध्वनन्ति।

गरुडः। सविस्मयम्। अये!

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं चैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः।

---

(भ) संरक्षतेति। अद्य स्वशरीरदानात् पन्नगं संरक्षता मया यत् पुण्यम् आर्जितम् अनुष्ठितं तेन पुण्येन भवे भवे जन्मनि जन्मनि परार्थहेतोः खलु परस्यार्थमेव मम देहलाभो भूयात्। उपजाति-वृत्तम्।

(म) अस्मिन्निति। शेषान् अहीन् नागान् रक्षितुम् अस्मिन् वध्यशिलातले निपतितम् एनमिति शेषः अधुना अनिलचञ्चुचञ्चु-तरया वज्रेणेव अतिप्रचण्डया चञ्च्वा वक्षसि निर्भिद्य रक्ताम्बरप्रावृतं रक्तवस्त्राच्छादितम् अतएव मत्तो भयेन दीर्यमाणात् हृदयात् प्रस्य-न्दिना स्रवता असृजा रुधिरेण दिग्धमिव लिप्तमिव भोगिनं पन्नगं भोक्तुं तरसा बलेन वेगेन वा उद्धरामि। शार्दूलविक्रीडितं वृत्तम्।

विहस्य ।

आः ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः
सर्वैः संवर्तकाभ्रैरिदमपि रचितं जातसंहारशङ्कैः ॥७६॥
(य)

नायकः । आत्मगतम् । दिष्ट्या कृतार्थोऽस्मि ।

गरुडः । नायकं पश्यन् (र) ।

नागानां रक्षिता भाति पुरुषेषु यथा मम ।
तथा सर्पाशनाकांक्षां व्यक्तमद्यापनेष्यति ॥७७॥ (ल)

तद् यावदेनं गृहीत्वा मलयपर्वतमारुह्य यथेष्टमाहारयामि । इति निष्क्रान्तः ।

इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

---

(य) आमोदेति । आमोदेन सौरभेण आमन्त्रिता आहूता भ्रमरा यया तादृशी पुष्पाणां वृष्टिः इयं किं कथं नभसः आकाशात् निपतति ? किंवा कथं वा स्वर्गे एव दुन्दुभीनां निनादः दिशां चक्रं दिङ्मण्डलं मुखरयति ध्वनयति ?

आः ज्ञातमिति । आः ज्ञातं सम्यक् विदितं मम जवमरुता वेगानिलेन कोऽपि पारिजातः कम्पितः तेनैतत् पुष्पवृष्टिरिति भावः । सर्वैश्च संवर्तकाभ्रैः तदाख्यमेघनिचयैः जाता संहारस्य जगतस्य शङ्का येषां तथाभूतैः सद्भिः इदं रचितं शब्दायितमपि इति मन्ये कल्पयामि । स्रग्धरावृत्तम् ।

(र) पश्यन् अवलोकयन् ।

(ल) नागानामिति । नागानां रक्षिता कोऽपि अयं पुरुषेषु मध्ये यथा भाति राजते तथा व्यक्तं निश्चितम् अद्य मम सर्पाणाम् अशनाकाङ्क्षां भोजनेच्छाम् अपनेष्यति ।

# अथ पञ्चमोऽङ्कः।

तत: प्रविशति प्रतीहारः।

प्रती। स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात्।

किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥७८॥ (क)

तथाहि—जीमूतवाहनो जलनिधिवेलावलोकनकुतू-हली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वा-वसुः। समादिष्टश्चास्मि तेन। यथा—सुनन्द! श्रुतं मया सन्निहितगरुड़प्रतिभयमुद्देशं जामाता जीमूतवाहनो गत इति प्रहित एवास्मि पनेन। तत् त्वरितं विज्ञायागच्छ किमसौ स्वगृहमागतो नवेति। यावत्तत्र गच्छामि। परि-क्रामद्भ्य दृष्ट्वा। अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गने सह सधर्मचारिण्या राजपुत्र्या च पर्य्युपास्यमानस्तिष्ठति (ख)। तथाहि।

---

(क) स्वगृहेति। स्निग्धे स्नेहभाजने जने स्वस्य गृहस्य उद्यान-गतेऽपि स्नेहात् पापम् अनिष्टं विशङ्क्यते मन्यते, दृष्टः बहुः अपायः विनाशः यत्र तादृशं प्रतिभयं भयङ्करं भीषणं भयङ्करं प्रतिभयमित्य-मरः। यत् कान्तारं दुर्गमं वनं कान्तारो वर्त्म दुर्गममित्यमरः। तत्र तिष्ठतीति तथाभूते स्निग्धे किमु? किं वक्तव्यं शङ्कायामित्यर्थः। आर्य्यावृत्तम्।

(ख) सन्निहितेति। सन्निहितेन समागतेन गरुड़ेन प्रतिभयं भयङ्करम्। पर्य्युपास्यमानः सेव्यमानः।

क्षौमे भङ्गवती तरङ्गतरले फेनाम्बुतुल्ये वहन्
आश्लिष्टेव विराजितः सुवयसा देव्या महापुण्यया ।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैषान्तिकवर्त्तिनी मलयवत्याभाति वेला यथा ॥७९॥
(ग)

तद् यावदुपसर्पामि ।

ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः ।

जीमू । भुक्तानि यौवनसुखानि यशोऽवकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥८०॥ (घ)

---

(ग) क्षौमे इति । भङ्गवती भङ्गमती इत्यर्थः तरङ्गतरले ऊर्मि-चपले फेनाम्बुतुल्ये फेनजलनिभे क्षौमे पट्टदुकूले वहन् दधानः सुवयसा विगताम्बुना आश्लिष्टया इव महापुण्यया अतिपवित्रया देव्या महिष्या विराजितः शोभितः अयं जीमूतकेतुः तोयनिधेः समुद्रस्य सुसदृशाम् अनुरूपां श्रियं शोभां धत्ते धारयति यथा मलयवती यस्य अन्तिकवर्त्तिनी समीपवर्त्तिनी वेला यथा तस्य वेला समुद्र-तीरवर्तिस्थलम् । आभाति भ्राजते । शार्दूलविक्रीडितं वृत्तम् ।

(घ) भुक्तानीति । मया यौवनसुखानि भुक्तानि, यशसा अवकीर्णं आच्छादिते पृथ्वी इत्यर्थः राज्ये स्थितं यशसा सह राज्यं पालितमित्यर्थः, स्थिरधिया अनन्यमनसा इत्यर्थः तपः चान्द्रायणादिकमपि चरितं कृतम् । सुतः पुत्रः जीमूतवाहनः ममेति शेषः श्लाघ्यः सर्वजनप्रशंसनीय इत्यर्थः इयञ्च सुसदृशान्वया अनुरूपवंशोद्भवा स्नुषा पुत्रवधूः मलयवतीत्यर्थः नतु अतएव अद्य इदानीं मया कृतार्थया सर्वेषु विषयेषु चरितार्थतया मृत्युः चिन्त्यः प्रार्थनीयस्तेनेति भावः ।

सुनन्दः। (उपसृत्य) जीमूतवाहनस्य।

जीमू॰। (कर्णौ पिधाय।) शान्तं पापम्।

वृद्धा। पडिहदं क्खु एदं अमङ्गलं (१)।

मलयवती। वेवदि मे हिअअं इमिणा दुण्णिमित्तेण (२)।

जीमू॰। (वाक्यावसानं रूपयित्वा।) भद्र! किं जीमूतवाहनस्य।

सुनन्दः। जीमूतवाहनस्य वार्त्तामन्वेष्टुं महाराजविश्वावसुना युष्मदन्तिकं प्रेषितोऽस्मि।

जीमू॰। किमसन्निहितस्तत्र मे वत्सः।

वृद्धा। (सविषादम्।) महाराअ! जइ तहिं ण सण्णिहिदो ता कहिं गदो मे पुत्तओ भविस्सदि (३)।

जीमू॰। नूनमस्मदाहरणार्थं (क) गतो भविष्यति।

वधू। (सविषादमात्मगतम्।) अहं उण अज्जउत्तं अपेक्खन्ती अण्णं एव्व किम्पि आसङ्कामि (४)।

सुनन्दः। आज्ञापय। किं मया स्वामिने निवेदनीयम्।

---

(१) प्रतिहतं खल्वेतदमङ्गलम्।

(२) वेपते मे हृदयमनेन दुर्निमित्तेन।

(३) यदि तत्र न सन्निहितस्तत् क्व गतो मे पुत्रको भविष्यति।

(४) अहं पुनरार्यपुत्रमप्रेक्षमाणा अन्यदेव किमपि आशङ्के।

---

एवं जानन्नोऽहं यदा अन्यत्त्वं पश्यामीति चिन्तयामीत्यर्थः। [illegible]-तिकं वृत्तम्।

(क) अस्मदाहरणार्थम् अस्माकं जीविकासमाहरणार्थमित्यर्थः।

कुमारः । यदाज्ञापयति देवी । (इति निष्क्रान्तः ।)

जीमू० । देवि ! अपि नागचूडामणिः स्यात् ।

ततः प्रविशति रक्तवस्त्रसंवीतः (ढ) शङ्खचूडः ।

शङ्ख । सास्रम् ।

गोकर्णमर्णवतटे त्वरितं प्रणम्य

प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।

आदाय तं नखमुखक्षतवक्षसञ्च

विद्याधरं गगनमुत्पतितो गरुत्मान् ॥ ८१ ॥ (ण)

तत् । हा महासत्त्व ! हा परमकारुणिक ! हा निष्कारणैकबान्धव ! हा परदुःखदुःखित ! क्व गतोऽसि प्रयच्छ मे प्रतिवचनम् । हा शङ्खचूडहतक ! किं कृतं त्वया ?

मातृपित्रा कीर्त्तिरेकाह्नमाना

नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।

---

(ढ) रक्तेति । रक्तवस्त्राभ्यां संवीतः आच्छादितः ।

(ण) गोकर्णेति । अर्णवतटे समुद्रतीरे गोकर्णं [illegible] शिव-लिङ्गं प्रणम्य त्वरितं सत्वरं भुजङ्गमानां वध्यभूमिं प्राप्तः आगतः अस्मि खलु । गरुत्मांश्च नखमुखेन नखाग्रेण क्षतं विदीर्णं वक्षो यस्मिन् तथाभूतं तथा तं विद्याधरम् आदाय गृहीत्वा गगनम् आकाशम् उत्पतितः । अत्र प्राप्त्युत्पतनक्रिययोर्यौगपद्यात् समुच्चयोऽ-लङ्कारः । तदुक्तं दर्पणे, समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके । खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत् । गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये इति । वसन्ततिलकं वृत्तम् ।

(त) तेति । हे शङ्खचूडहतक इति आत्मानं प्रति आक्षे-पोक्तिः त्वया एकाहम् [illegible] एकदिनमदान्वर्थः [illegible]

मलय। दुःखातिभाराद् बाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम्।

जीमू। आवेदय ममात्मीयं पुत्रदुःखं सुदुःसहं।
संक्रान्तमस्ति हृदये येन सह्यं भविष्यति ॥८६॥ (त)

मलय। श्रूयताम्। शङ्खचूड़ो नाम नागः खल्वहम् आहारार्थं वासुकिना वैनतेयाय प्रेषितः। किं वा विस्तरेण। कदाचिदिय रुधिरधारापद्धतिः पांशुभिरवकीर्य्यमाणा दुर्लक्ष्यतामुपयाति (थ)। तत् संक्षेपतः कथयामि।
विद्याधरेण केनापि करुणाविष्टचेतसा।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥८७॥ (द)

जीमू। कोऽन्य एवं परहितव्यसनी (ध)। वत्स! ननु स्पष्टमेवोच्यतां जीमूतवाहनेनेति। हा हतोऽस्मि! मन्दभाग्यः।

---

(त) आवेदयेति। आवेदय निवेदय, मम आत्मीयं स्वीयं सुदुःसहं पुत्रदुःखं पुत्रार्थं वैक्लव्यरूपं हृदये संक्रान्तं स्थितम् अस्ति, येन हृदयस्थितेन सह्यं तदावेदनमिति भावः भविष्यति।

(थ) रुधिरधारेति। रुधिराणां धारापद्धतिः धाराचिह्नम्। पांशुभिः धूलिभिः अवकीर्य्यमाणा आच्छाद्यमाना। दुर्लक्ष्यताम् अदृश्यतामित्यर्थः।

(द) विद्याधरेणेति। केनापि करुणाविष्टचेतसा विद्याधरेण गरुत्मते आत्मानं स्वदेहं दत्त्वा मम प्राणा रक्षिताः।

(ध) परेति। परेषां हिते हितानुष्ठाने व्यसनी आसक्तः निरत इत्यर्थः।

वृद्धा। हा पुत्तक! कहं तुए एदं कदं (११)।

मल। कहं सच्चीभूदं एव्व दुच्चिन्तिदं (१२)। सर्वे मोहं गच्छन्ति।

शङ्ख। सास्रम्। नूनमेतौ पितरौ तस्य महासत्त्वस्य। कथमप्रियवादिना मया इमामवस्थां नीतौ। अथवा विषाद्धृतं विषधरस्य मुखात् किमन्यन्निःसरति। अहो! प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन। तत् किमधुनैवात्मानं व्यापादयामि। अथवा समाश्वासयामि तावदेतौ। तात! समाश्वसिहि। अम्बा समाश्वसितु। उभौ समाश्वसितः।

वृद्धा। वच्छे! उट्ठेहि मा रोद। अम्हे किं जीमूतवाहणेण विणा जीवम्ह। ता समस्सस दाव (१३)।

मल। समाश्वस्य। अज्जउत्त! कहिं मए तुमं पेक्खिदव्वो (१४)।

जीमू। हा वत्स! गुरुचरणशुश्रूषाविधिज्ञ!।

चूडामणिं चरणयोर्मम पातयता त्वया।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः॥८८॥ (न)

---

(११) हा पुत्रक! कथं त्वयैतत् कृतम्।

(१२) कथं सत्यीभूतमेव दुश्चिन्तितम्।

(१३) वत्से! उत्तिष्ठ। मा रोदीः। वयं किं जीमूतवाहनेन विना जीवामः। तत् समाश्वसिहि तावत्।

(१४) आर्यपुत्र! क्व मया त्वं प्रेक्षितव्यः।

---

(न) चूडामणिमिति। त्वया मम चरणयोः चूडामणिं पातयता

चूडामणिं दृष्ट्वा। हा वत्स! कथमेतावन्मात्रदर्शनः संवृत्तोऽसि। हृदये दत्त्वा। अहह!!!

भक्त्या सुदूरमवनामितनम्रमौलेः

शश्वत्तव प्रणमतश्चरणौ मदीयौ।

चूडामणिर्निकषणैर्मसृणोऽप्यहिंस्रो

गाढं विदारयति मे हृदये कथन्नु ॥८८॥ (प)

वृद्धा। हा पुत्त जीमूदवाहण! जस्स दे गुरुजणसुस्सूसं वज्जिअ अण्णं सुहं ण रोअदि। सो कहिं दाणिं पिदरं उज्झिअ सग्गसुहं अणुहोदुं गदोसि (१५)।

राजा। आत्मम्। देवि! किं जीमूतवाहनेन विना जीवामो वयं येनैवं प्रलपसि।

मल०। पादयोर्निपत्य कृताञ्जलिः। ता देहि मे अज्जउत्त-

---

(१५) हा पुत्र! जीमूतवाहन! यस्य ते गुरुजनशुश्रूषां वर्जयित्वा अन्यत् सुखं न रोचते। स कथमिदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि।

---

निक्षिपता मया लोकान्तरगतेनापि विनयक्रमः शिष्टाचारपद्धतिः न उज्झितः न त्यक्तः।

(प) भक्त्येति। भक्त्या सुदूरम् अत्यन्तम् अवनामितः नम्रः स्वभावविनतः मौलिः मस्तकं येन तादृशस्य शश्वत् सततं मदीयौ चरणौ प्रणमतः वन्दमानस्य तव चूडामणिः निकषणैः घर्षणैः मसृणोऽपि चिक्कणोऽपि अहिंस्रः कोमलः सन् हृदये मदीये हत इति शेषः कथन्नु कथं वा गाढम् अत्यन्तं विदारयति कथमत्र चरणयोर्न्योऽपि हृदये धार्यते इति तर्कयतीवेति भावः। वसन्ततिलकं वृत्तम्।

चिह्नं चूडामणिं जेण एदं हिअए कदुअ जलणप्पवेसेण अवणेमि हिअअस्स सन्दावदुक्खं (१६)।

जीमू। पतिव्रते! किमेवमाकुलयसि। ननु सर्वेषामेवास्माकमयं निश्चयः।

वृद्धा। महाराअ! ता किं अम्हेहिं पडिपालीअदि। (१७)

जीमू। न खलु देवि! किञ्चित्। किन्त्वाहिताग्नीनामस्माकमग्निना संस्कारो (फ) विहितः। अतोऽग्निहोत्रशरणादग्नीनादायात्मानमुद्दीपयामः।

मल०। (स्वगतम्)। कष्टं समेकस्य कुले सकलमेवेदं विद्याधरकुलमुच्छिन्नम्। तदेवं तावत्। (प्रकाशम्)। तात! न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम्। अविचारितानि हि दैवविलसितानि। कदाचिदयं नाग इति ज्ञात्वा परित्यज्यागमनुः। तदनयैव दिशा वैनतेयमनुसरामस्तावत्।

वृद्धा। सव्वहा देवदाणं पसादेण जीअन्तस्स पुत्तअस्स मुहं दंसेह (१८)।

(१६) तदहं हि मे आर्यपुत्रचिह्नं चूडामणिं येनेदं हृदये कृत्वा ज्वलनप्रवेशेन अपनयामि हृदयस्य सन्तापदुःखम्।

(१७) महाराज! तत् किमस्माभिः प्रतिपाल्यते।

(१८) सर्वथा देवतानां प्रसादेन जीवतः पुत्रस्य मुखं द्रक्ष्यामः।

(फ) आहिताग्नेः अग्निहोत्रिणः वह्निना आहुत्यातिरिक्तेन। संस्कारो दाहः।

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदयै-
र्मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।
गात्रं यन्न विलुप्तमेष पुलकस्तत्र स्फुटो दृश्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥ ८१ ॥

(म)

ततः कुतूहलमेव जनितमस्यानया धैर्यवृत्त्या (य) ।
भवतु न भक्षयाम्येवैनम् । पृच्छामि तावत् कोऽयमिति ।

नायकः । शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि च ते महात्मन् !
किं भक्षणात्त्वं विरतो गरुत्मन् ! ॥ ८२ ॥ (र)

---

(म) ग्लानिरिति । अधिकं यथा तथा पीयमानं रुधिरं यस्य तादृशस्यापि अस्य ग्लानिः व्यथा नास्ति, मांसानाम् उत्कर्तनेन खण्डनेन जायन्ते इति तथोक्ताः रुजः पीडा अपि वहतः अस्य धैर्योदयैः धैर्यातिरेकैः मुखं प्रसन्नं विषादो दूरमपास्तमिति भावः, यत् गात्रं शरीरं न विलुप्तं विनष्टम् अपितु तत्र एकः केवलः पुलकः रोमहर्षः परप्राणरक्षणजनितानन्दोदयादिति भावः । स्फुटः स्पष्टः दृश्यते । अस्य दृष्टिः अपकारिणि आततायिनि अपि मयि उपकारिणीव निपतति । शार्दूलविक्रीडितं वृत्तम् ।

(य) धैर्यवृत्त्या धैर्यव्यवहारेण ।

(र) शिरेति । शिराणां मुखैः रक्तं स्यन्दते क्षरत्येव, अद्यापि मम देहे मांसम् अस्ति, हे महात्मन् ! ते तव तृप्तिं परितोषम् न पश्यामि, हे गरुत्मन् ! त्वं किं कथं भक्षणात् विरतः निवृत्तः ? ।

गरुडः । आत्मगतम् । आश्चर्यमाश्चर्यम् ! कथमस्यामप्यवस्थायामेवमूर्जितमभिधत्ते (क)। प्रकाशम् ।

आवर्जितं मया चञ्च्वा हृदयात्तव शोणितम् ।
अनेन धैर्येण पुनस्त्वयाहृतमिवाद्य मे ॥ ८३ ॥ (ख)

तत् कस्त्वमिति श्रोतुमिच्छामि ।

नायकः । एवं क्षुधुपतप्तो (ग) न श्रवणयोग्यस्त्वम् । कुरुष्व तावत् मम मांसशोणितेन तृप्तिम् ।

शङ्ख । सहसोपसृत्य । तार्क्ष्य ! न खलु न खलु साहसमनुष्ठेयम् । नायं नागः । परित्यजैनं । मां भक्षय । अहं तवाहारार्थं प्रेषितोऽस्मि वासुकिना । उरो ददाति (घ)।

नायकः । शङ्खचूडं दृष्ट्वा । कष्टं ! विफलीभूतो मे मनोरथः शङ्खचूडेनागच्छता ।

गरुडः । उभौ निरूप्य । द्वयोरपि भवतोर्वध्यचिह्नम् । कः खलु नाग इति नावगच्छामि ।

शङ्ख । स्थान एव भ्रान्तिः ।

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुकी
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि ।

---

(क) ऊर्जितं तेजस्वलम् ।

(ख) आवर्जितमिति । मया चञ्च्वा तव हृदयात् शोणितम् आवर्जितम् आहृतं पीतमित्यर्थः पुनः किन्तु त्वया अनेन धैर्येण एतदवस्थायामपि अक्षोभ्यत्वरूपेणेति भावः । मे मम शोणितमिति शेषः आहृतमिव ।

(ग) क्षुधुपतप्तः क्षुधानिपीडितः ।

(घ) उरः वक्षःस्थलं ददाति दर्शयतीत्यर्थः ।

तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुस्सहशोकशीत्कृतमरुत्पीडाः फणाः पश्यसि ॥८४॥

(ख)

गरुडः। सभयं निरूप्य शङ्खचूडस्य फणां दृष्ट्वा। तत्कः खलु मया व्यापादितः।

शङ्ख। विद्याधरवंशतिलको जीमूतवाहनः। कथमकारुणिकेन त्वया इदमनुष्ठितम्।

गरुड। स्वगतम्। कथमनुष्ठितम्। अयं विद्याधरकुमारो जीमूतवाहनः?

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि।
दिक्कूलेषु च तेषु तेषु बहुशो यस्य श्रुतं तन्मया
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥८५॥ (ग)

---

(ख) व्यक्तामिति। यद्यपि स्वस्तिक लक्ष्म स्वस्तिकं नाम नागचिह्नविशेषः तदेव लक्ष्म लक्षणम् व्यक्तं तिष्ठतु, तनौ शरीरे वर्मेति शेषः कञ्चुकः (खोलोस इति यस्य प्रसिद्धिः) न आलोक्यते न दृश्यते स्यादिति शेषः। किन्तु त्वया अत्यन्तः व्याकुलत एव जिह्वे अपि न गण्यते न आश्यते नाम, तथा तीव्रेण तीक्ष्णेन दारुणेनेत्यर्थः विषाग्नेः धूमपटलेन धूमनिवहेन व्याजिह्मा मलिना रत्नानां त्विषः कान्तयः यासां तथोक्ताः दुःसहेन सोढुमशक्येन शोकेन यत् शीत्कृतं शीत्कारः तदेव मरुत् वायुः कम्पनकारित्वादिति भावः। तेन पीडा कम्पनरूपा व्यथा यासां तादृशीः तिस्रः एताः फणाः न पश्यसि?। शार्दूलविक्रीडितं वृत्तम्।

(ग) मेराविति। मया खलु मेरौ सुमेरुशैले मन्दरस्य पर्वतस्य कन्दरासु गुहासु, हिमवतः हिमाचलस्य सानौ प्रस्थे, महेन्द्राचले,

सर्वथा महत्यंहःपङ्के (घ) निमग्नोऽस्मि ।

नायकः । भोः फणिपते ! किमेवमुद्विग्नोऽसि ।

शङ्ख । किमस्थानमिदमावेगस्य (क) ।

स्वशरीरमिदं दत्त्वा तार्क्ष्यात् परिरक्षितं यदीयमिदम्
युक्तं नेतुं भवतः पातालतलादपि तलं माम् ॥८६॥ (ख)

गरुडः । अये ! करुणार्द्रचेतसा अनेन महात्मना अस्मद्ग्रासगोचरपतितस्यास्य फणिनः प्राणान् रक्षितुं स्वदेह आहारार्थमुपनीतः । तन्महदकृत्यमेतन्मया कृतम् । किं बहुना बोधिसत्त्व एवायं व्यापादितः । तस्य महतः पापस्य अग्निप्रवेशादृते नान्यत् प्रायश्चित्तं पश्यामि । तत् क्व नु खलु वह्निं समासादयामि (ग) ।

---

कैलासस्य शिलातलेषु, मलयस्य पर्वतस्य प्राग्भारभागेषु पूर्वविभागेषु तथा तेषु तेषु दिक्कुञ्जेषु दिगन्तकाननेषु बहुशः प्रभूतं पुनः पुनर्वा लोकालोके पर्वते विचरन्तीति तथोक्ता ये चारणगणाः वैतालिकवर्गाः तैः उच्चैर्गम्भीरध्वानेन गीयमानं तत् प्रसिद्धं यशः श्रुतम् । शार्दूलविक्रीडितं वृत्तम् ।

(घ) अंहःपङ्के पापपङ्के ।

(क) अस्थानम् अयोग्यस्थानम् । आवेगस्य वैक्लव्यस्य ।

(ख) स्वशरीरमिति । स्वशरीरम् इदं दत्त्वा तार्क्ष्यात् गरुडात् यदीयं यस्य मम इदं शरीरं परिरक्षितं त्वयेति शेषः तं मां भवतः पातालतलात् अपि तलं नेतुं युक्तम् । इत्यस्य ते पाताले कथमहं मुखं दर्शयिष्यामि अतस्तस्मादपि तले मम गमनं युक्तमिति निष्कर्षः ।

(ग) बोधिसत्त्वः तदाख्यः करुणाधारः कश्चिन्महात्मा । समासादयामि प्राप्नोमि ।

दिशः पश्यन्। अये! अमी केचित् गृहीतामिष इत एवागच्छन्ति। तद् यावदेतान् प्रतिपालयामि।

शङ्ख। कुमार! पितरौ ते प्राप्तौ।

नायकः। ससम्भ्रमम्। शङ्खचूड! समुपविश्योत्तरीयेण आच्छादितशरीरं कृत्वा धारय माम्। अन्यथा कदाचि-दीदृशं सहसैव मां दृष्ट्वा अम्बा जीवितं जह्यात्।

शङ्ख। पार्श्वपतितमुत्तरीयं गृहीत्वा तथा करोति।

ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः।

जीमू। सास्रम्। हा पुत्र जीमूतवाहन!

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः
किं रक्ष्या बहवः किमेक इति ते जाता न चिन्ता कथम्।
तार्क्ष्यात् त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निःशेषमेतत् कुलम्॥ ८७॥
(घ)

वृद्धा। मलयवतीमुद्दिश्य। जाते! विरम मुहूर्तम्।

---

(घ) आत्मीय इति। कृपायाम् अयम् आत्मीयः स्वजनः, अयं परः इत्ययं क्रमः नियमः विचार इत्यर्थः कुतः, अयं खलु सत्यमेव कृपाविषयेऽपि आत्मपरविचारो नास्तीति तथ्यमित्यर्थः। किम् बहवः किं रक्ष्याः रक्षणीयाः? किम् एकः रक्ष्यः इति ते तव कथं न चिन्ता जाता। येन त्वया अहिं पन्नगम् एकमिति शेषः त्रातुं रक्षितुं स्वशरीरपरित्यागं कुर्वता सता आत्मा पितरौ वधूरिति एतत् कुलं निःशेषं हतं नाशितम्। शार्दूलविक्रीडितं वृत्तम्।

अविरलनिवडन्तवाहबिन्दूहिं अहिहवीअदि (ङ) अअं अग्गी (२०)।

सर्वे परिक्रामन्ति।

वृद्धा। हा पुत्र जीमूतवाहन!

गरुडः। श्रुत्वा। हा! जीमूतवाहनेति ब्रवीति। तद्व्यक्तमयमस्य पिता। तत् किमेतदीयेनाग्निना आत्मानमुद्दीपयामि। न शक्नोमि अस्य पुत्रघातलज्जया मुखन्दर्शयितुम्। अथवा किमग्निहेतोः पर्याकुलोऽस्मि। तटस्थ (च) एवास्मि जलनिधेः। तद् यावदिदानीं।

ज्वालाभङ्गैस्त्रिलोकग्रसनरसलसत्कालजिह्वाप्रकल्पैः
सर्पद्भिः सप्तसप्तेः पदमिव कवलीकर्तुमौर्वैः समुद्रे।
स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पक्षवातैः
अस्मिन् कल्पावसानज्वलनभयकरे वाडवाग्नौ पतामि १८
(छ)

इत्युत्थातुमिच्छति।

---

(२०) जाते! विरम मुहूर्तम्। अविरलनिपतद्बाष्पबिन्दुभिरभिभूयतेऽयमग्निः।

---

(ङ) अभिभूयते निर्वाणम् प्राप्यते।

(च) तटस्थः तीरस्थः।

(छ) ज्वालाभङ्गैरिति। त्रिलोकस्य त्रिभुवनस्य ग्रसने यः रसः अनुरागः तेन लसत् स्फुरत् यत् कालस्य जिह्वाग्रं तत् कल्पैः तत्सदृशैः सर्पद्भिः प्रसरद्भिः अतएव सप्तसप्तेः सूर्य्यस्य पदं स्थानं सूर्य्यलोकमित्यर्थः कवलीकर्तुं ग्रासीकर्तुं ईशैः समर्थैः ज्वालाभङ्गैः अर्चिर्निचयैः उपलक्षिते इति शेषः उपलक्षणे तृतीया। स्वैरेव उत्-

नायकः। भोः पक्षिराज! अलमनेनाध्यवसायेन। नायं प्रतीकारोऽस्य (ज) पाप्मनः।

गरुडः। जानुभ्यां स्थित्वा कृताञ्जलिः। भो महात्मन्! कस्तर्हि कथ्यताम्।

नायकः। प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ। यावदेतौ प्रणमामि।

गरुडः। एवं क्रियताम्।

जीमू। दृष्ट्वा सहर्षम्। देवि! दिष्ट्या वर्द्धसे। अयं वत्सो जीमूतवाहनो न केवलं ध्रियते। प्रत्युत कृताञ्जलिना गरुडेन शिष्येणेव पर्य्युपास्यमानस्तिष्ठति (झ)।

वृद्धा। महाराय! कयत्थम्हि। अक्खदसरीरस्स मुहं पेक्खिस्सं (२१)।

मल। अहं अज्जउत्तं पेक्खिअ अदिप्पिअत्ति करिअ ण पत्तिआमि (ञ)। (२२)

(२१) महाराज! कृतार्थास्मि। अक्षतशरीरस्य मुखं प्रेक्षिष्ये।

(२२) अहमार्य्यपुत्रं प्रेक्ष्य अतिप्रियमिति कृत्वा न प्रत्येमि।

याते प्रलये यः वातस्य प्रसरः प्रस्फुरणं तद्वत् पटुतराः प्रचण्डा इत्यर्थः तैः पक्षयोर्वातैः समुद्रे घूर्णिते सन्दीपिते कल्पावसाने प्रलये यः ज्वलनः अग्निः तद्वत् भयङ्करे भयजनके अस्मिन् बाडवाग्नौ पतामि। स्रग्धरावृत्तम्।

(ज) प्रतीकारः प्रायश्चित्तम्।

(झ) ध्रियते जीवति। पर्य्युपास्यमानः सेव्यमानः।

(ञ) प्रत्येमि विश्वसिमि।

कौसल्या। उपसृत्य। वत्स! एह्येहि। परिष्वजस्व माम्।

नायकः। उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति।

मधु। कुमार! समाश्वसिहि समाश्वसिहि।

कौस। हा वत्स! कथं मां दृष्ट्वा परिष्वङ्ग (ट) गतोऽसि।

दासी। हा पुत्तक! कहं वाचामेत्तकेण वि तुए ण सम्भाविदम्हि (२३)।

माता। हा अज्जउत्त! कहं गुरुजणो वि दे ण पेक्खिदव्वो (२४)। सर्वे मोहं गच्छन्ति।

मधु। हा! मकरध्वजहतक! कथं गर्भस्थ एव न विपन्नोऽसि। येनैवं पदे पदे मरणातिगं दुःखमनुभवसि।

गरुड़ः। सर्वमिदं मम नृशंसस्य असमीक्ष्यकारितायाः विजृम्भितम् (ठ)। तदेवं तावत् करोमि। पक्षाभ्यां वीजयन्। भो महात्मन्! समाश्वसिहि समाश्वसिहि।

नायकः। समाश्वस्य। मकरध्वज! समाश्वासय गुरून्।

मधु। तात! समाश्वसिहि समाश्वसिहि। अम्ब! समाश्वसिहि समाश्वसिहि। उभौ समाश्वसितः।

---

(२३) हा पुत्रक! कथं वाङ्मात्रेणापि त्वया न सम्भाविताऽस्मि।

(२४) हा आर्यपुत्र! कथं गुरुजनोऽपि ते न प्रेक्षितव्यः।

---

(ट) परिष्वङ्गम् आलिङ्गनम्।

(ठ) असमीक्ष्यकारितायाः अविमृश्यकारितायाः। विजृम्भितं विलासः कार्यं मित्यर्थः।

वृद्धा । पुत्त ! कहं पेक्खन्ताणं एव्व अम्हाणं कदन्त-हदएण अवहरीअसि । (२५)

जीमू । देवि ! मैवममङ्गल्यवादिनी भव । ध्रियत एवायुष्मान् । तद्वधूः समाश्वास्यताम् ।

वृद्धा । मुखं वस्त्रेणाच्छाद्य रुदती । पडिहदममङ्गलम् । ण रोदिस्सम् । मलअवदि ! समस्सस । वच्छे ! उट्ठेहि उट्ठेहि । वरं एत्तिअवेलं तुमं भत्तुणो मुहं पेक्ख । (२६)

मल । समाश्वस्य । । हा अज्जउत्त ! (२७)

वृद्धा । मलयवत्या मुखं पिधाय । वच्छे ! मा एव्वं करेहि । पडिहदं क्खु एदं (२८) ।

जीमू । सास्रमात्मगतम् ।

विलुप्तशेषाङ्गतया प्रयातान्<br>
निराश्रयत्वादिव कण्ठदेशम् ।<br>
प्राणांस्त्यजन्तं तनयं निरीक्ष्य<br>
कथं न तापात् शतधा प्रयामि ॥ ९८ ॥ (ड)

---

(२५) कथं प्रेक्षमाणानामेवास्माकं कृतान्तहतकेनापह्रियसे ।

(२६) प्रतिहतममङ्गलम् । न रोदिष्यामि । मलयवति ! समाश्वसिहि वरमेतस्यां वेलायां त्वं भर्तुर्मुखं प्रेक्षस्व ।

(२७) हा आर्यपुत्र !

(२८) वत्से ! मैवं कुरु । प्रतिहतं खल्वेतत् ।

---

(ड) विलुप्तेति । विलुप्तशेषाणि विनष्टशेषाणि अङ्गानि अवयवा यस्य तत्तया हेतुना निराश्रयत्वात् निरवलम्बनत्वादिव कण्ठदेशं प्रयातान् गतान् प्राणान् त्यजन्तं तनयं पुत्रं निरीक्ष्य तापात् व्यथाति-

नटी । हा अज्जउत्त ! अदिदुक्करकारिणी क्खु अहं । जा ईदिसं अज्जउत्तं पेक्खन्ती अज्जवि जीविदं ण परिच्चआमि (२९) ।

वृद्धा । [illegible] गदट्ठिहिं । णिसंस (ठ) कहं दाणीं तए एदं णाडरमाणजोव्वणसोहं तं एव्व एदा-वत्थं पुत्तअस्स मे सरीरं कदं (३०) ।

माधवः । अम्ब ! मा मैवं । किमनेन कृतम् । ननु पूर्व्व-मप्येतदीदृशमेव (ण) परमार्थतः । पश्य

मेदोऽस्थिमांसमज्जासृक्संघातेऽस्मिंस्त्वचावृते ।
शरीरे वास्ति का शोभा सदा बीभत्सदर्शने ॥ १०० ॥ (त)

---

(२९) हा आर्य्यपुत्र ! अतिदुष्करकारिणी खल्वहम् । या ईदृशम् आर्य्यपुत्रं प्रेक्षमाणा अद्यापि जीवितं न परित्यजामि ।

(३०) नृशंस ! कथमिदानीं त्वया एतदारोहद्वयोयौवनशोभं तदे-वैतावदवस्थं पुत्रकस्य मे शरीरं कृतम् ।

---

देहात् कथं शतधा न भवामि न विदीर्य्ये इत्यर्थः । उपजाति-वृत्तम् ।

(ठ) नृशंस ! निर्दय !

(ण) एतत् शरीरमिति शेषः परमार्थतः तत्त्वतः ईदृशम् एत-दवस्थमेव ।

(त) मेद इति । मेदसां वसानाम् अस्थ्नां कङ्कालानां मांसानां मज्जानाम् असृजां रुधिराणाञ्च सङ्घाते समष्टिरूपे त्वचा चर्म्मणा आवृते आच्छादिते सदा बीभत्सं घृणितं दर्शनं यस्य तादृशे अस्मिन् शरीरे का वा शोभा अस्ति ? नैव कापि शोभेत्यर्थः । तत् कथमेन-मधिक्षिपसि जननीति भावः ।

गरुड़ः। भो महात्मन्! नरकानलज्वालावलीढमिवात्मानं मन्यमानो दुःखं तिष्ठामि। तदुपदिश्यतां येन मुच्येयमस्मादेनसः। (च)

नायकः। अनुजानातु मां तातः। यावदस्य पापस्य प्रतिपक्षमुपदिशामि। (छ)

जीमू। वत्स! एवं क्रियताम्।

नायकः। वैनतेय! श्रूयताम्।

गरुड़ः। कृताञ्जलिः। आज्ञापय।

नायकः।

नित्यं प्राणाभिघातात् प्रति विरम कुरु प्राक्कृतस्यानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम्।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
ऽनैतद्वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य ॥१०१॥ (ज)

---

(च) नरकेति। नरकानलस्य ज्वालाभिः शिखाभिः अवलीढं दग्धमिव। एनसः पापात्।

(छ) प्रतिपक्षं शत्रुं प्रायश्चित्तमिति यावत्।

(ज) नित्यमिति। नित्यं सततं प्राणाभिघातात् परप्राणद्रोहात् प्रति विरम निवर्त्तस्व, प्राक् पूर्वस्मिन् काले कृतस्य प्राणिहिंसनरूपस्य पापस्य अनुतापं कुरु, कथमेतन्मया कृतमिति सन्तापम् अनुभव, सर्वेषु सत्त्वेषु जीवेषु अभीतिम् अभयं दिशन् ददत् यत्नात् पुण्यप्रवाहं पुण्यसमूहं समुपचिनु अर्जय, येन येन उक्तरूपेण कर्मणा इति भावः। अत्र जगति प्राणिहिंसासमुत्थं जीवहिंसाजन्यं परिणतं फलोन्मुखमित्यर्थः एतत् एनः पापं ह्रदस्य अन्तः वारिपूरे जलप्रवाहे क्षिप्तं लवणकणमिव मग्नं विलीनं विनष्टमिति यावत् न फलति न फलं निरयादिकम् उत्पादयतीत्यर्थः। स्रग्धरावृत्तम्। उपमालङ्कारः।

गरुड़ः । यदाज्ञापयसि ।

अज्ञाननिद्राशयितो भवता प्रतिबोधितः ।

सर्वप्राणिवधादेष विरतोऽद्यप्रभृत्यहम् ॥ १०२ ॥ (न)

सम्प्रति हि

क्वचिद् द्वीपाकारैः पुलिनविपुलैर्भोगनिवहैः
कृतावर्त्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।
व्रजन् कूलात् कूलं क्वचिदपि च सेतुप्रतिसमः ।
समाजो नागानां विचरतु महोदन्वति सुखम् ॥१०३॥ (प)

अपि च,

स्रस्तानापादलम्बान् घनतिमिरनिभान् केशपाशान् वहद्भिः
सिन्दूरेणेव दिग्धैः प्रथमरविकरस्पर्शताम्रैः कपोलैः ।

---

(न) अज्ञानेति । अज्ञानमेव निद्रा तया शयितः सुप्तः अचेतन इति यावत् एषः अहं भवता प्रतिबोधितः जागरितः सन् अद्यप्रभृति सर्वेषां प्राणिनां वधात् विरतः निवृत्त इत्यर्थः ।

(प) क्वचिदिति । नागानां समाजः गणः क्वचित् द्वीपाकारैः सर्वतो जलवेष्टितो भूभागः द्वीपमुच्यते तदाकारैः, पुलिनं सैकतं तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्यमरः, तद्वत् विपुलाः प्रशस्ताः तैः भोगनिवहैः शरीरसमूहैः भोगः सुखेस्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । उपलक्षितः क्वचित् वलयितं मण्डलीकृतं शरीरं येन तथोक्तः अतएव कृता जनिता आवर्त्तस्य जलभ्रमस्य स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः, भ्रान्तिः भ्रमः येन तथाभूतः क्वचित् अपि कूलात् कूलं व्रजन् गच्छन् अतएव सेतुप्रतिमः सेतुनिभः सन् महोदन्वति महासमुद्रे सुखं निर्भयमिति यावत् यथा यथा विचरतु सञ्चरतु । शिखरिणीछन्दः रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ।

आयासेनालसाङ्ग्योऽप्यवगणितरुजः कानने चन्दनानाम्
अस्मिन् गायन्तु रागादुरगयुवतयः कीर्तिमेतां तवैव ॥१०४॥

(फ)

नायकः। साधु महासत्त्व! साधु! अनुमोदामहे। सर्वथा दृढसमाधानो (ब) भव। शङ्खचूड निवर्तस्व। शङ्खचूड! त्वयापि स्वगृहमिदानीं गम्यताम्।

शङ्खः। निःश्वस्य अधोमुखस्तिष्ठति।

नायकः। निःश्वस्य मातरं पश्यन्।

उत्प्रेक्षमाणा त्वां तार्क्ष्यचञ्चुकोटिनिपातितम्।
त्वद्दुःखदुःखिता नूनमास्ते सा जननी तव ॥ १०५ ॥ (भ)

---

(फ) अस्मिन्निति। उरगाणां नागानां युवतयः पत्न्यः अस्मान् स्खलितान् अत एव आपादलम्बान् चरणपर्यन्तपतितानित्यर्थः घन-तिमिरनिभान् सान्द्रान्धकारप्रतिमान् केशपाशान्, [illegible]नि-न्त्यः वहन्त्यः दधाना इत्यर्थः प्रथमेन नवोदितेन रविकरेण सूर्य-किरणेन यः स्पर्शः तेन ताम्राः रक्ताः तैः अत एव सिन्दूरेणेव दिग्धैः लिप्तैः कपोलैः उपलक्षिता इत्यर्थः आयासेन श्रमेण [illegible]नेति भावः अलसानि श्रान्तानि अङ्गानि यासां तथोक्ताः अपि अव-गणिता अविचिन्तिताः रुजः पीडाः श्रमजनिता इति भावः याभिः तथाभूताः सत्यः अस्मिन् चन्दनानां कानने रागात् अनुरागात् तवैव एवकारस्य अन्यव्यवच्छेदकत्वात् न ममेति भावः एतां कीर्तिं नागेषु अभयदानजनितामिति शेषः गायन्तु कीर्तयन्तु। स्रग्धरावृत्तम्।

(ब) अनुमोदामहे अनुमन्यामहे। दृढं समाधानं निश्चयो यस्य तादृशः सत्यप्रतिज्ञ इत्यर्थः।

(भ) उत्प्रेक्षमाणेति। सा तव जननी त्वां तार्क्ष्येण गरुडेन चञ्चुकोट्यां चञ्च्वग्रे निपातितम् उत्प्रेक्षमाणा सम्भावयन्ती अत एव नूनं

वृद्धा । साश्रम् । धण्णा क्खु सा जणणी जा गरुड़मुहपडिदस्स अक्खदसरीरस्स एव्व पुत्तअस्स मुहं पेक्खिस्सदि(२१)।

वृद्धः । अम्ब ! सत्यमेवैतत् । यदि कुमारः स्वस्थो भविष्यति ।

नायकः । वेदनां नाटयन् । अहह ! परार्थसम्पादनरसाक्षेपात्तावती वेला मया न लक्षिताः । सम्प्रति तु मां बाधितुमारब्धा मर्म्मच्छेदिन्यो वेदनाः । मरणावस्थां नाटयति (भ)

जीमू । ससम्भ्रमम् । हा वत्स ! किमेवं करोषि ।

वृद्धा । हा ! किं णु क्खु एव्वं वददि । सोरस्ताड़म् । परित्ताअह परित्ताअह । एसो क्खु मे पुत्तओ विवज्जइ । (य) (२२)

---

(२१) धन्या खलु सा जननी या गरुड़मुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते ।

(२२) हा ! किं नु खल्वेवं वदति । परित्रायध्वं परित्रायध्वम् । एष खलु मे पुत्रको विपद्यते ।

---

निश्चितं तव दुःखेन शोकेन दुःखिता आर्त्ता आस्ते तिष्ठति, अथवा नूनं मन्ये इत्युत्प्रेक्षा । अतः सत्वरं त्वया माता आश्वासनीयेति भावः ।

(भ) नाटयन् अभिनयन् । परार्थेति परार्थस्य परकार्य्यस्य नागप्राणरक्षणरूपस्य इति भावः सम्पादने यो रसः अनुरागः तस्य आक्षेपात् अतिरेकात् । लक्षिताः गणिताः वेदना इत्यनेनान्वयः । वेलामिति व्याप्त्यर्थे द्वितीया । नाटयति अभिनयति ।

(य) सोरस्ताड़ं वक्षःस्थलं ताड़यित्वा । विपद्यते म्रियते ।

(र) समानय संयोजय ।

वधू। हा अज्जउत्त! परिच्चइदुकामो विअ लक्खीअसि। (२३)

नायकः। अञ्जलिं कर्तुमिच्छन्। शङ्खचूड! समानय (र) मे हस्तौ।

शङ्ख। तथा कुर्वन्। कष्टमनाथीकृतं (ल) जगत्।

नायकः। अर्द्धोन्मीलितचक्षुः पितरं पश्यन्। तात! अम्ब! अयं मे पश्चिमः प्रणामः।

गात्राण्यमूनि न वहन्ति सचेतनत्वं
श्रोत्रं स्फुटाक्षरपदां न गिरं शृणोति।
कष्टं निमीलितमिदं सहसैव चक्षुः
हा तात! यान्ति विवशस्य ममासवोऽमी ॥१०६॥ (व)

अथवा। संरक्षता पन्नगम्। इत्यादि पठित्वा पतति।

वृद्धा। हा पुत्त! हा वच्छ! हा गुरुअणवच्छल! कहिंसि। देहि मे पडिवअणं (२४)।

---

(२३) हा आर्य्यपुत्र! परित्यक्तुकाम इव लक्ष्यसे।

(२४) हा पुत्र! हा वत्स! हा गुरुजनवत्सल! क्वासि। देहि मे प्रतिवचनम्।

---

(ल) तथा कुर्वन् करौ संयोजयन्। अनाथीकृतं नाथशून्यं कृतं जगदिति शेषः। पश्चिमः शेषः।

(व) गात्राणीति। अमूनि गात्राणि अङ्गानि सचेतनत्वं चैतन्यमित्यर्थः न वहन्ति धारयन्ति भवन्तीत्यर्थः। श्रोत्रं श्रवणेन्द्रियं स्फुटानि सुव्यक्तानि अपि अक्षरपदानि यस्यां तादृशीमपीति शेषः गिरं वाचं न शृणोति। कष्टम् इदं चक्षुः सहसैव निमीलितम्। हा तात!

जीमू। हा वत्स! जीमूतवाहन! हा प्रणयिजन-वत्सल! हा सर्वगुणनिधे! क्वासि देहि मे प्रतिवचनम्।

(ऊर्द्ध्वमवलोक्य।) कष्टं भोः कष्टम्।

निराधारं धैर्य्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता।
हतं सत्यं सत्यं व्रजतु च कृपा क्वाद्य कृपणा
जगज्जातं शून्यं त्वयि तनय! लोकान्तरगते॥१०७॥ (ग)

मल। हा अज्जउत्त! कहं परिच्चइअ गदोसि अदि-णिग्घिणि मलअवदि! किं तए पेक्खिदव्वं? जा एत्तिअं वेलं जीविआसि (२५)।

शङ्ख। हा कुमार! केमं प्राणेभ्योऽपि वल्लभं जनं परित्यज्य गम्यते। तदवश्यमन्वेति त्वां शङ्खचूडः।

---

(२५) हा आर्य्यपुत्र! कथं परित्यज्य गतोऽसि। अतिनिर्घृणे मलयवति! किं त्वया प्रेक्षितव्यम्? या एतावद्वेलं जीवितासि।

---

[illegible] मम ध्रुवमी क्षमवः प्राणा यान्ति निर्गच्छन्ति। वसन्ततिलकं वृत्तम्।

(ग) निराधारमिति। हे तनय! त्वयि लोकान्तरगते सति धैर्य्यं निराधारं निराश्रयं न कोऽपीदानीं धैर्य्यमाश्रयतीति भावः। विनयः कमिव शरणं रक्षितारं शरणं स्वरक्षितारमित्यमरः यातु गच्छतु न कमपीत्यर्थः। इह जगति क्षान्तिं क्षमां वोढुम् आश्रयितुं कः क्षमः शक्तः? न कोऽपीत्यर्थः। दानपरता वदान्यता विरता रहिता, सत्यं सत्यं निश्चितं हतं विनष्टम्, अद्य कृपणा दीना कृपा दया क कुत्र व्रजतु गच्छतु? किं बहुना अद्य जगत् शून्यं जातम्। सर्वगुणशालिनस्तव विरहादिति भावः। शिखरिणीवृत्तम्।

गरुडः। कष्टमुपरतोऽयं (ङ) महात्मा। तत् किमिदानीं करोमि।

वृद्धा। (ऊर्ध्वमवलोक्य) भअवन्तो लोअपाला! कहिम्पि अमिदेण सेञ्चिअ पुत्तअं मे जीआवेहि (२६)।

गरुडः। (सहर्षमात्मगतम्) अये! अमृतसङ्कीर्तनात् साधु स्मृतम्। मन्ये प्रनष्टमयशः। तद् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनमेतानपि पूर्वभक्षितानस्थिशेषानुरगपतीन् प्रत्युज्जीवयामि। यदि न ददात्यसौ (च) तदाहम्।

पक्षैः पीत्वाम्बुनाथं पटुतरजवनैः प्रेर्यमाणः समीरैः<br>
नेत्राग्निक्रोधमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कः।<br>
वज्रं सद्यः प्रकाशं निधनदगदाप्रेतलोकेशदण्डान्<br>
आजौ निर्जित्य देवान् क्षणममृतमयं वर्षमभ्युत्सृजामि ॥१०८॥

(छ)

---

(२६) भगवन्तो लोकपालाः। कथमप्यमृतेन सिक्त्वा पुत्रकं मे जीवय।

---

(ङ) उपरतः मृतः।

(च) त्रिदशपतिं देवराजम्। अभ्यर्थ्य याचित्वा, तद्विसृष्टेन तद्दत्तेन। असौ देवराजः।

(छ) पक्षैरिति। पटुतराः समर्थतराः अतएव जवनाः वेगवन्तः तैः समीरैः पवनसदृशैरित्यर्थः पक्षैः प्रेर्यमाणः उह्यमान इत्यर्थः अम्बुनाथं समुद्रं पीत्वा नेत्राग्निना यः क्रोधः दाहः तेन या मूर्च्छा मोहः तया विधुराः विकलाः अतः निपतन्तः सानलाः साग्निकाः

तदयं गतोऽस्मि । इति साटोपं (ख) परिक्रम्य निष्क्रान्तः ।

जीमू । वत्स शङ्खचूड । किमद्यापि स्थीयते । समाहृत्य दारूणि पुत्रस्य मे विरचय चिताम् । येन वयमप्यनेन सहैव गच्छामः ।

वृद्धा । पुत्त सङ्खचूड । लहुं सज्जेहि । दुक्खं अम्हेहिं विणा भाउणो दे चिट्ठदि (३७) ।

शङ्ख । सास्रम् । यदाज्ञापयन्ति गुरवः । नन्वग्रग एवाहं युष्माकम् । उत्थाय चितारचनां कृत्वा । तात ! अम्ब ! सज्जीकृतेयं चिता ।

जीमू । देवि ! किमपरं कथ्यते । तदुत्तिष्ठ चितायामारोहामः । सर्वे उत्तिष्ठन्ति ।

मल । बद्धाञ्जलिरूर्ध्वं पश्यन्ती । भअवदि गोरि ! तुए आणत्तं । जहा विज्जाहरचक्कवट्टी भत्ता दे भविस्सदि त्ति । ता कहं मम मन्दभग्गाए कदे तुमं पि अलिअवअणा संवुत्ता । (३८)

---

(३७) पुत्र शङ्खचूड ! लघु सज्जय । दुःखमस्माभिर्विना भ्राता ते तिष्ठति ।

(३८) भगवति गौरि ! त्वया व्याहृतम् । विद्याधरचक्रवर्ती भर्त्ता

---

द्वादश अर्काः सूर्याः यस्य तथाभूतः वज्रो शक्रस्य इन्द्रस्य अशनिः, धनदस्य कुवेरस्य गदा, प्रेतलोकानामीशस्य यमस्य दण्डः तान् सञ्चूर्ण्य आजौ युद्धे देवान् निर्जित्य पराभूय अद्य अमृतमयं वर्षम् अभ्युत्सृजामि करोमीत्यर्थः । स्रग्धरावृत्तम् ।

(ख) साटोपं ससम्भ्रमं सावेगं वा ।

ततः प्रविशति सम्भ्रान्ता गौरी।

गौरी। महाराज! जीमूतकेतो! न खलु साहसमनुष्ठातव्यम्।

जीमू। अये! कथममोघदर्शना गौरी।

गौरी। मलयवतीमुद्दिश्य वत्से! कथमहमलीकवादिनी भवेयम्। नायकमुपसृत्य कमण्डलुजलेनाभ्युक्ष्य।

निजेन जीवितेनापि जगतामुपकारिणः।
परितुष्टास्मि ते वत्स! जीव जीमूतवाहन!॥१०८॥ (क)

नायकः। उत्तिष्ठति।

जीमू। आश्चर्यम्। देवि! दिष्ट्या वर्धसे। प्रत्युज्जीवितो वत्सः।

वृद्धा। भअवदीए पसादेण। (३८)

नायकः। गौरीं दृष्ट्वा बद्धाञ्जलिः। अये! कथममोघदर्शना भगवती?।

अभिलषिताभ्यधिकवरदे प्रणिपतितजनार्तिहारिणि! शरण्ये!
चरणौ नमाम्यहं ते विद्याधरवन्दिते! गौरि!॥१०९॥(ख)

---

ते भविष्यतीति। तत् कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता।

(३८) भगवत्याः प्रसादेन।

---

(क) निजेनेति। हे वत्स! जीमूतवाहन! निजेन जीवितेन जगताम् उपकारिणः ते तव परितुष्टास्मि प्रीतास्मि।

(ख) अभीति। अभिलषितं वाञ्छितम् अधिकं [illegible] वरं ददातीति

इति गौर्याः पादयोः पतति । सर्वे अहं पश्यन्ति ।

जीमू । अये ! कथमनभ्रा वृष्टिः । भगवति ! किमेतत् ।

गौरी । राजन् जीमूतकेतो । जीमूतवाहनं प्रत्युज्जीवयितु मेतांश्चास्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना देवलोकादियममृतवृष्टिः पातिता । अङ्गुल्या निर्दिश्य । किं न पश्यति भवान् ।

सम्प्राप्ताः प्रकृचूडं स्फुटमणिकिरणैर्भासुरैरुत्तमाङ्गैः
जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः ।
सम्प्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवैते
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति ॥ १११॥

(ग)

नायकमुद्दिश्य । वत्स जीमूतवाहन ! न त्वं जीवितदानमात्रस्यैव योग्यः । तदयमपरस्ते प्रसादः ।

---

तत् सम्बोधने तथा प्रणिपतितानां जनानाम् आर्तिहारिणि ! कृपाशालिनि ! शरण्ये शरणागतरक्षिणि ! विद्याधरैः वन्दिते ! हे गौरि ! अहं ते तव चरणौ नमामि । आर्याछन्दः ।

(ग) सम्प्राप्ता इति । शङ्खचूड सम्प्राप्ताः सङ्गताः शङ्खचूडेन मिलिता इत्यर्थः स्फुटा उज्ज्वलाः मणीनां फणस्थितानामिति शेषः किरणाः प्रभाः येषां तादृशैः उत्तमाङ्गैः शिरोभिः फणैरिति यावत् उपलक्षिताः अमृतरसस्य अमरीक्षात् इष्टस्येति भावः आस्वादलोभात् जिह्वाकोटिद्वयेन जिह्वाद्वितयाग्रभागेनेत्यर्थः क्षितिं पृथिवीं लिहन्तः आस्वादयन्तः मलयगिरेः सरितां नदीनां वारिपूरा इव जलप्रवाहा इव सम्प्रति आबद्धवेगाः वेगवन्तः एते विषधरपतयः भुजगेन्द्राः वक्रैः कुटिलैः प्रस्थानमार्गैः गतिभिरित्यर्थः तोयराशिं समुद्रं विशन्ति । स्रग्धराछन्दः ।

हंसांसाहतहेमपङ्कजरजःसम्पर्कपङ्कोज्झितै-
स्तैरेभिर्मम मानसादुपनतैस्तोयैर्महापावनैः ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषाभिषिच्य स्वयं
त्वां विद्याधरचक्रवर्त्तिनमहं प्रीत्या करोमि क्षणात् ॥११२॥
(घ)

अपि च

अग्रेसरीभवतु काञ्चनचक्ररत्न-
मेष द्विपश्च धवलैर्दशनैश्चतुर्भिः ।
श्यामो हरिर्मलयवत्यपि चेत्यमूनि
रत्नानि मे समवलोकय चक्रवर्त्तिन् ! ॥११३॥ (ङ)

अपि च । आलोक्यन्तामभी शारदशशाङ्कनिर्मलचामरव्य-
जनहस्ता मणिमरीचिरचितेन्द्रचापभङ्गया भक्तिनमित-

---

(घ) हंसेति । एषा सुप्रसन्नेति भावः अहं स्वयं प्रीत्या परितोषेण हेतुना क्षणात् क्षणमात्रेण मम मानसात् उपनतैः हंसानाम् अंसैः स्कन्धभागैः आहतानां कम्पितानां हेमपङ्कजानां काञ्चनकमलानां रजोभिः परागैः सम्पर्क एव पङ्कस्तेन उज्झितैः विरहितैः अस्पृष्टैरिति यावत् महापावनैः अतिपवित्रैः स्वेच्छया निर्मितेषु रत्नकुम्भेषु निहितैः स्थापितैः उपनतैः उपस्थितैः तोयैः जलैः त्वाम् अभिषिच्य विद्याधराणां चक्रवर्त्तिनम् अधीश्वरं करोमि । शार्दूलविक्रीडितं वृत्तम् ।

(ङ) अग्रेसरीभवत्विति । हे चक्रवर्त्तिन् ! काञ्चनानां चक्रराशिरेव रत्नम् अग्रेसरीभवतु तवाग्रे गच्छतु । धवलैः शुभ्रैः चतुर्भिः दशनैः उपलक्षितः चतुर्दन्त इत्यर्थः एष द्विपः ऐरावत इत्यर्थः श्यामः कृष्णवर्णः हरिरश्वराजः मलयवती च इति अमूनि मे मम रत्नानि समवलोकय पश्य । वसन्ततिलकं वृत्तम् ।

पूर्वार्धकायाः (ख) प्रणमन्ति नमन्ति च मतङ्गजनकाद्या
विद्याधरपतयः। तदुच्यतां किं ते भूयः प्रियमुपकरोमि।

नायकः। अतः परमपि प्रियमस्ति।

त्रातोऽयं शङ्खचूडः पतगपतिभयाद्वैनतेयो विनीतः
तेन प्राग्भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे।
मत्प्राणाप्त्या च मुक्ता न गुरुभिरसवश्चक्रवर्त्तित्वमाप्तं
साक्षात् त्वं देवि! दृष्टा प्रियमपरमतः किं पुनः प्रार्थ्यसे यत्
॥११४॥ (क)

तथापीदमस्तु भरतवाक्यम्।
वृष्टिं हृष्टशिखण्डिताण्डवभृते मुञ्चन्तु काले घनाः
कुर्वन्तु प्रतिरूढसन्ततहरित्सस्योत्तरीयां क्षितिम्।

---

(ख) आलोकयन्तीं दृश्यन्ताम्। शारदेति शारदः शरत्कालीनः यः शशाङ्कः तद्वत् निर्मलं वालव्यजनं छत्रं येषां तथाभूताः, मणीनां रत्नानां स्वस्वगात्रपरिहितानामिति भावः मरीचिभिः किरणैः रचिताः निर्मिता इन्द्रचापस्य शक्रधनुष इव भङ्गयः रचनाः यैः तथाभूताः तथा भक्त्या नमितः पूर्वार्धकायः यैः तथाविधाः।

(क) त्रात इति। अयं शङ्खचूडः पतगपतेः पक्षिराजस्य भयात् त्रातः रक्षितः वैनतेयः गरुड़ः विनीतः विनयं गतः। तेन वैनतेयेन प्राक् पूर्वं ये विषधरपतयः नागेन्द्राः भक्षिताः ते सर्वेऽपि जीविताः, मम प्राणप्राप्त्या जीवनलाभेन गुरुभिः पित्रादिभिः असवः प्राणा न मुक्ताः न त्यक्ताः, चक्रवर्त्तित्वं विद्याधरसाम्राज्यम् आप्तं प्राप्तं मयेति शेषः किं बहुना हे देवि! त्वं साक्षात् दृष्टा साक्षात् कृता, अतःपरं प्रियं किं पुनः, यत् प्रार्थ्यसे त्वमिति शेषः नातःपरमपि प्रियमस्तीति न किमपि प्रार्थये इत्यर्थः। स्रग्धरावृत्तम्।

चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसैः
मोदन्तां सततञ्च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥११५॥
(अ)

इति निष्क्रान्ताः सर्वे।

इति पञ्चमोऽङ्कः।

समाप्तञ्चेदं नागानन्दं नाम नाटकम्।

---

(अ) वृष्टिमिति। घना मेघाः हृष्टानां शिखण्डिनां मयूराणां ताण्डवभृते नर्तनार्थं काले वृष्टिं सृजन्तु वर्षन्तु इत्यर्थः। प्रतिरूढं सञ्जातं सन्ततम् अविच्छिन्नं यत् हरित् सस्यं धान्यादि तदेव उत्तरीयं गात्रावरणवसनरूपं यस्यास्तथाभूतां क्षितिं पृथिवीं कुर्वन्तु च। तथा प्रजाः वीता विगता विपद् यासां तथाभूताः निर्मत्सरैः अन्यशुभद्वेषवर्जितैरित्यर्थः मत्सरोऽन्यशुभद्वेष इत्यमरः। मानसैः सुकृतानि सत्कार्य्याणि चिन्वानाः कुर्वन्तः तथा बान्धवानां भ्रातृपितृव्यादीनां सुहृदां मित्राणाञ्च गोष्ठीषु समाजेषु प्रमोदन्त इति तथाविधाः सत्यः सततं मोदन्तां सुखीभवन्तु च। शार्दूलविक्रीडितं वृत्तम्।

इति पञ्चमोऽङ्कः।

---

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता नागानन्दनाटकव्याख्या समाप्ता।